# हाम्रो भनाइ

पाठ्यक्रम शिक्षण सिकाइको मूल आधार हो । पाठ्यपुस्तक विद्यार्थीमा अपेक्षित दक्षता विकास गर्ने एक मुख्य साधन हो । यस पक्षलाई दृष्टिगत गर्दै पाठ्यक्रम विकास केन्द्रले विद्यालय शिक्षालाई व्यावहारिक, समयसापेक्ष र गुणस्तरीय बनाउने उद्देश्यले पाठ्यक्रम तथा पाठ्यपुस्तकको विकास तथा परिमार्जन कार्यलाई निरन्तरता दिँदै आएको छ । आधारभूत शिक्षाले बालबालिकामा आधारभूत साक्षरता, गणितीय अवधारणा र सिप एवम् जीवनोपयोगी सिपको विकासका साथै व्यक्तिगत स्वास्थ्य तथा सरसफाइसम्बन्धी बानीको विकास गर्ने अवसर प्रदान गर्नुपर्छ । आधारभूत शिक्षाको माध्यमबाट बालबालिकाहरूले प्राकृतिक तथा सामाजिक वातावरणप्रति सचेत भई अनुशासन, सदाचार र स्वावलम्बन जस्ता सामाजिक एवम् चारित्रिक गुणको विकास गर्नुपर्छ । यसले विज्ञान, वातावरण र सूचना प्रविधिसम्बन्धी आधारभूत ज्ञानको विकास गराई कला तथा सौन्दर्यप्रति अभिरुचि जगाउनुपर्छ । शारीरिक तन्दुरुस्ती, स्वास्थ्यकर बानी एवम् सिर्जनात्मकताको विकास तथा जातजाति, धर्म, भाषा, संस्कृति, क्षेत्रप्रति सम्मान र समभावको विकास पनि आधारभूत शिक्षाका अपेक्षित पक्ष हुन् । देशप्रेम, राष्ट्रिय एकता, लोकतान्त्रिक मूल्यमान्यता तथा संस्कार सिकी व्यावहारिक जीवनमा प्रयोग गर्नु, सामाजिक गुणको विकास तथा नागरिक कर्तव्यप्रति सजगता अपनाउनु, स्तरअनुकूल व्यवहारकुशल सिपको प्रयोग गर्नु र दैनिक जीवनमा आइपर्ने व्यावहारिक समस्याहरूको पहिचान गरी समाधानका उपायको खोजी गर्नु पनि माध्यमिक तहको शिक्षाका आवश्यक पक्ष हुन् । यी पक्षलाई दृष्टिगत गरी माध्यमिक तह (कक्षा ९-१०) को पाठ्यक्रम, २०७८ अनुरूप ऐच्छिक विषयका रूपमा संस्कृत भाषा (अस्माकं संस्कृतम्) विषयको यो पुस्तक विकास गरिएको छ । यो पुस्तक आधारभूत विद्यालय तहको कक्षा ९ मा नमुना पाठ्यपुस्तक तथा कार्यपुस्तकका रूपमा प्रयोग गरिने छ ।

संस्कृत भाषा (अस्माकं संस्कृतम्) विषयको यस पुस्तकको विकास श्री ध्रुवप्रसाद भट्टराई, श्री गणेश तिमिल्सिना, श्री पर्वतराज घिमिरे र श्री पुरुषोत्तम घिमिरे सम्मिलित कार्यदलबाट भएको हो । यस नमुना विद्यार्थी कार्यपुस्तकको विकास कार्यमा श्री अणप्रसाद न्यौपाने, प्रा.डा. नुरापति पोखरेल, श्री टुकराज अधिकारी, उपप्रा. रोहिणीराज तिमिल्सिना, श्री शिवप्रसाद लामिछाने, श्री केशव भट्टराई, श्री नारायणप्रसाद घिमिरे, श्री निश्चल अधिकारी र श्री भीमप्रसाद खतिवडाको विशेष योगदान रहेको छ । यस पुस्तकको लेआउट डिजाइन श्री सन्तोषकुमार दाहाल र चित्राङ्कन श्री देव कोइमीबाट भएको हो । यस पुस्तकको विकास तथा सम्पादन कार्यमा संलग्न सबैप्रति पाठ्यक्रम विकास केन्द्र धन्यवाद प्रकट गर्दछ ।

पाठ्यपुस्तकले विद्यार्थीमा निर्धारित सक्षमता विकासका लागि विद्यार्थीलाई सहयोग गर्ने छ । यसले विद्यार्थीको सिकाइमा सहयोग पुऱ्याउने एउटा महत्त्वपूर्ण र आधारभूत सामग्रीका रूपमा कक्षा क्रियाकलापबाट हुने सिकाइलाई मजबुत बनाउन सहयोग गर्ने छ । त्यसैले यो शिक्षकको सिकाइ क्रियाकलापको योजना नभई विद्यार्थीका सिकाइलाई सहयोग पुऱ्याउने सामग्री हो । यसका लागि यस पाठ्यपुस्तकलाई विद्यार्थीको सिकाइमा सहयोग पुऱ्याउने एउटा महत्त्वपूर्ण आधारका रूपमा बालकेन्द्रित, सिकाइकेन्द्रित, अनुभवकेन्द्रित, उद्देश्यमूलक, प्रयोगमुखी र क्रियाकलापमा आधारित बनाउने प्रयास गरिएको छ । सिकाइ र विद्यार्थीको जीवन्त अनुभवबिच तादात्म्य कायम गर्दै यसको सहज प्रयोग गर्न शिक्षकले सहजकर्ता, उत्प्रेरक, प्रवर्धक र खोजकर्ताका रूपमा भूमिकाको अपेक्षा गरिएको छ । यसलाई अझ परिष्कृत पार्नका लागि शिक्षक, विद्यार्थी, अभिभावक, बुद्धिजीवी एवम् सम्पूर्ण पाठकहरूको समेत विशेष भूमिका रहने हुँदा सम्बद्ध सबैको रचनात्मक सुझावका लागि पाठ्यक्रम विकास केन्द्र हार्दिक अनुरोध गर्दछ ।

वि.सं. २०७९

**पाठ्यक्रम विकास केन्द्र**
सानोठिमी, भक्तपुर

# विषयसूची

प्रथमः पाठ

# स्वागतसंस्कृतिः

## पाठप्रवेशः

अस्माकं जन्मभूमिरेव अस्माकं देशो वर्तते । माता अस्मभ्यं जन्म ददाति चेत् देशोऽन्नेन, वायुना, जलेन औषधेन च अस्मान् पोषयति । अतो माता इव पूज्यो मन्यते देशः । जननी जन्मभूमिश्च स्वर्गादपि गरीयसी इति आत्मना स्वीकृत्य अस्माकं पूर्वजा देशरक्षायै स्वप्राणान् अत्यजन् किन्तु वैरिपादतले नैव अपतन् । 'देशस्य रक्षायै कर्म, देशस्य कृते जीवनम्' अस्माकमादर्शः । वीरतायाः, साधुतायाः, त्यागस्य, सेवाभावस्य च दृष्टान्तरूपेण सम्पूर्णं जगत् अस्मान् उदाहरति । अस्माकं गौरवरूपेण इदं यशो निखिलेषु भुवनेषु प्रसृतं वर्तते ।



अस्माकं प्रत्येकं नागरिकस्य अन्तर्हृदये देशप्रेम ओतं प्रोतञ्चास्ति । देश एव प्राणः, देश एव जीवनम् इति वयं मन्यामहे । वयं देशस्य इव मानवताया अपि आदरं कुर्मः । अत एव अतिथीन् पर्यटकान् देवरूपान् मत्वा पूजयामः । मनसा वचसा कर्मणा च तान् सत्कुर्मः । अस्माकम् आतिथ्यपरम्परा लोकवन्दिता विद्यते । अत्रत्यां आतिथ्यप्रथां प्रशंसन्तो वैदेशिकाः कथयन्ति, "धन्या नेपालिजनानां देशभक्तिः ! धन्या च एतेषाम् आतिथ्यपरम्परा !"

हाम्रो जन्मभूमि नै हाम्रो देश हो । आमाले हामीलाई जन्म दिनुहुन्छ भने देशले अन्न, वायु, पानी र औषधिद्वारा हामीलाई परिपुष्ट बनाउँछ । त्यसैले देश आमाभैँ पूज्य मानिन्छ । जननी र जन्मभूमि स्वर्गभन्दा पनि गौरवशाली हुन्छन् भन्ने कुरा आत्माबाटै स्वीकार गरेर हाम्रा पुर्खाले देशको रक्षाका लागि आफ्नो प्राण त्यागे तर शत्रुसामु घुँडा टेकेनन् । देशको रक्षाका लागि काम र देशका लागि जीवन नै हाम्रो आदर्श हो । वीरता, साधुता, समर्पण र सेवाभावका लागि सम्पूर्ण संसारले हाम्रो उदाहरण दिन्छ । हाम्रो गौरवका रूपमा रहेको यो यश सम्पूर्ण जगत्मा फैलिएको छ ।

हामी प्रत्येक नागरिकको हृदयभित्र देशप्रेम ओतप्रोत भएर रहेको छ । हामी देश नै प्राण हो र देश नै जीवन हो भन्ने ठान्दछौँ । हामी देशझैँ मानवताका पनि प्रेमी हौँ । त्यसैले अतिथि पर्यटकलाई देवता मानी पूजा गर्दछौँ । वन, वचन र कर्मले अतिथिको सत्कार गर्दछौँ । हाम्रो अतिथिपरम्परा लोकमा प्रशंसित छ । यहाँको अतिथिपरम्पराको प्रशंसा गर्दै विदेशीहरूले भनेका छन्, "धन्य छ नेपालीको देशभक्ति ! धन्य छ यिनीहरूको आतिथ्यपरम्परा !"

## मूलपाठः स्वागतसंस्कृतिः

बान्धवभावे समुदारः, रिपुजनवर्गे विकरालः
कीर्तिपताकालङ्कारः, जय जय देशो नेपालः ।

हरितैर्वनोपवनादिभिः, उन्नतगिरिवरसन्ततिभिः
सुरम्यदेशो नेपालः, बहुविधमानवसंस्कृतिभिः
गोर्खानाम्ना विख्यातः, जन्मधरा यो वीराणाम्
ज्ञानमयूखैः सन्दीप्तः, कर्मधरा वै धीराणाम् ॥

बान्धवभावे समुदारः, रिपुजनवर्गे विकरालः
कीर्तिपताकालङ्कारः, जय जय देशो नेपालः ।



ऐक्यमहिंसा सन्मैत्री, समता शान्ती राजन्ताम्
विभेदभावं सन्त्यज्य, लोकाः पुरतो वर्धन्ताम्
स्वागतशब्दैरस्माभिः, सत्क्रियमाणा आयान्तु
गिरिवरतटिनीक्षेत्रेषु भ्रामं भ्रामं विलसन्तु ॥

बान्धवभावे समुदारः, रिपुजनवर्गे विकरालः
कीर्तिपताकालङ्कारः, जय जय देशो नेपालः ।

१. अन्वयः - बान्धवभावे समुदारः रिपुजनवर्गे विकरालः कीर्तिपताकालङ्कारः नेपालः देशः जय जय ।

सरलार्थः - बन्धुत्वसम्पादनाय नेपालदेशः उदारः वर्तते परन्तु शत्रुजनेषु नेपालः भीषणः अस्ति । कीर्तिपताका एव नेपालदेशस्य आभूषणं वर्तते । एतादृशस्य नेपालदेशस्य जयः अस्तु ।

बन्धुत्वको निर्वाह गर्न सधैँ उदार तर शत्रुहरूका लागि सधैँ भयङ्कर नेपाल देशको अलङ्कार भनेको नै कीर्तिपताका हो । यो देशको सधैँ जय होओस् ।

२. अन्वयः - हरितवनोपवनादिभिः उन्नतगिरिवरसन्ततिभिः बहुविधमानवसंस्कृतिभिः नेपालः देशः सुरम्यः (अस्ति) । गोर्खानाम्ना सुविख्यातः ज्ञानमयूखैः सन्दीप्तः यो (देशः) वीराणाम् जन्मधरा धीराणाम् वै कर्मधरा (अस्ति) ।

सरलार्थः - हरितवनैः उपवनैः, उन्नतैः विस्तृतैश्च हिमालयैः, विविधजातिसम्बद्धानां जनानां संस्कृतिभिः नेपालदेशः सुरम्यः वर्तते । ज्ञानकिरणैः प्रज्वलितः गोर्खा इति नाम्ना संसारे सुप्रसिद्धः नेपालः वीराणां जन्मभूमिः धीराणां च कर्मभूमिः अस्ति ।

हरिया वन तथा उपवन, पङ्क्तिबद्ध भई फैलिएका अग्ला अग्ला हिमाल तथा अनेक जातजातिका असल संस्कृतिले नेपाललाई रमणीय बनाएका छन् । गोर्खाको नामले समेत प्रसिद्ध नेपालमा ज्ञानको किरण सर्वदा प्रज्वलित छ । यो देश वीरहरूको जन्मभूमि र धीरहरूको कर्मभूमि हो ।

३. अन्वयः - अहिंसा एकता सन्मैत्री समता शान्तिः राजन्ताम् । विभेदभावं सन्त्यज्य लोकाः पुरतो वर्धन्ताम् । स्वागतशब्दैः अस्माभिः सत्क्रियमाणाः (अतिथयः) आयान्तु । गिरिवरतटिनीक्षेत्रेषु भ्रामं भ्रामं विलसन्तु ॥

सरलार्थः - अत्र नेपालदेशे अहिंसा, पारस्परिकः एकताभावः, मित्रता, समानता, शान्तिश्च सर्वत्र विराजन्ते । हे जनाः ! इह सर्वविधं विभेदं परित्यज्य देशविकासाय जागरिताः भवन्तु । हे मान्याः अतिथयः ! स्वागतवचोभिः आतिथ्यकर्मणा च वयं भवतः सत्कुर्मः । भवन्तः इह आगच्छन्तु । हिमालयनदीतटादिक्षेत्राणां यथेच्छं भ्रमन्तु ।

नेपालमा अहिंसा, पारस्परिक एकता, मित्रता, समानता र शान्ति सर्वत्र विराजमान छ । हे नागरिकहरू ! यहाँ सबै प्रकारको विभेद त्यागेर देशविकासका लागि जागरुक हुनुहोस् । हे मान्य अतिथिजन ! हामी तपाईँहरूलाई शब्दले मात्र होइन, कर्मले पनि स्वागत र सत्कार गर्दछौँ । तपाईँहरू आउनुहोस् र हिमाल तथा नदीकिनारहरूको इच्छाअनुसार भ्रमण गर्नुहोस् ।

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| समुदारः | अत्यन्तम् उदारः | अत्यन्त उदार | Very Generous |
| विकरालः | भयानकः | डरलाग्दो | Dangerous |
| उन्नतगिरिवरसन्ततिभिः | उत्तुङ्गहिमालयपङ्क्तिभिः | अग्ला हिमालका पङ्क्तिहरूद्वारा | By tall Himalayan ranges |
| सुरम्यः | रमणीयः | रमणीय | Beautiful |
| ज्ञानमयूखैः | ज्ञानप्रकाशैः | ज्ञानको प्रकाशद्वारा | By Light of knowledge |
| सन्दीप्तः | प्रज्वलितः | बलेको | Burning |
| पुरतः | अग्रे | अगाडि | In front of |
| सत्क्रियमाणाः | सत्कृताः | सत्कार गरिएका | Respected |
| आयान्तु | आगच्छन्तु | आउनुहोस् | Come |
| भ्रामं भ्रामम् | परिभ्रम्य | भ्रमण गरेर | By Journey |

## अभ्यासः

### श्रवणं भाषणं च

१. राष्ट्रभक्तिमवलम्ब्य संस्कृतेन मातृभाषया वा विरचितं किञ्चन श्रुतपूर्वं गीतं कक्षायां सलयं श्रावयत ।

२. मित्रैः सह पदानि उच्चारयत

कीर्तिपताकालङ्कारः, हरितैर्वनोपवनादिभिः, विख्यातः, ज्ञानमयूखैः, सन्दीप्तः, सत्क्रियमाणाः ।

३. पाठस्थस्य गीतस्य प्रथमं सामूहिकं तदनु वैयक्तिकं गानं सलयं कुरुत ।

४. पाठाधारेण एकवाक्येन प्रश्नानामुत्तरं वदत

(क) नेपालः बान्धवभावे कीदृशो विद्यते ?

(ख) नेपालः केषां कर्मधरा अस्ति ?

(ग) जनाः कुत्र कथं विलसन्तु ?

(घ) नेपालः कैः कैः सुरम्यो देशः ?

(ङ) वीराणां जन्मधरा का ?

५. पाठाधारेण अतिथिसत्कारविषये मित्रेण सह विमर्शनं कुरुत ।

६. द्वे मित्रे सखायौ मिलित्वा कृतम् अतिथिस्वागतसंवादं साभिनयं पठत

गृहस्थः - नमो नमः । आगच्छतु, आगच्छतु ।

अतिथिः - धन्यवादः ।

गृहस्थः - अत्र भवतां स्वागतम् । उपविशतु ।

अतिथिः - धन्यवादः ।

गृहस्थः - कुशलं वा ?

अतिथिः - आम्, कुशलम् ।

गृहस्थः - को विशेषः ?

अतिथिः - विशेषः कोऽपि नास्ति । भवन्तः कुशलिनो वा ?

गृहस्थः - आम् । अत्र सर्वं कुशलं वर्तते । भवद्गृहे सर्वं कुशलं वा ?

अतिथिः - आम्, सर्वं कुशलं विद्यते ।

गृहस्थः - पुत्र्या अध्ययनं कथं प्रचलद् वर्तते ?

अतिथिः - सम्यक् । पठने तस्या महती रुचिर्वर्तते ।

गृहस्थः - अनुजस्य परीक्षा समाप्ता ?

अतिथिः - आम्, समाप्ता ।

गृहस्थः - व्यवसायश्च सम्यक् प्रचलति वा ?

अतिथिः - आम् । सम्यग् अस्ति ।

गृहस्थः - अहो ! विस्मृतवान् । पानीयं किं स्वीकरोति ?

अतिथिः - किमपि मास्तु ।

गृहस्थः - सङ्कोचो मास्तु । किञ्चित् स्वीकरोतु भोः !

अतिथिः - किञ्चिद् ददातु ।

गृहस्थः - किं ददानि ? चायम्, फलरसम्, अन्यद् वा ?

अतिथिः - फलरसं किञ्चिदेव ददातु ।

गृहस्थः - अस्तु, ददामि । स्वीकरोतु ।

अतिथिः - धन्यवादः ।

गृहस्थः - अन्यः को विशेषः ?

अतिथिः - न कोऽपि विशेषः । सर्वं सामान्यमेव । अद्य भगिनी न दृष्टा । कुत्रचिद् गतवती खलु ?

गृहस्थः - सा आपणं गतवती अस्ति ।

अतिथिः - अस्तु । अहं गच्छामि ।

गृहस्थः - किञ्चित् कालं तिष्ठतु । इदानीन्तु भगिनी अपि आगच्छन्ती भवेत् । अल्पाहारं कृत्वैव गच्छतु ।

अतिथिः - न । इदानीं गन्तव्यम् । पश्चात् पुनः आगमिष्यामि ।

गृहस्थः - अस्तु, पुनर्मिलाव ।

अतिथिः - अवश्यमेव । धन्यवादः ।

गृहस्थः - धन्यवादः ।

७. **पाठस्य आदौ प्रदत्तमनुच्छेदं पठित्वा प्रमुखविषयान् कक्षायां श्रावयत ।**

८. **अधस्तनस्यानुच्छेदस्य द्रुतपठनं विधाय कक्षायां श्रावयत**

सर्वेषामाश्रमाणाम् आश्रयाश्रमो गृहस्थाश्रम एव अस्ति । समाजं प्रति सर्वाधिकं महत्त्वपूर्णं दायित्वं गृहस्थाश्रमस्यैव सिद्ध्यति । गृहे स्थितो गृहस्थो भवति । अतः गृहं विना गृहस्थस्य कार्याणि न सिद्ध्यन्ति । पुरुषार्थचतुष्टयसिद्धये गृहस्थस्य कृते एकस्य शुभवास्तोः गृहस्य वा आवश्यकता भवति । भविष्यपुराणानुसारेण गृहस्थस्य सर्वाः क्रिया गृहं विना न सिद्ध्यन्ति ।

९. **मित्रमुखाद् वाक्यानि श्रुत्वा सत्यकथने 'आम्', असत्यकथने च 'न' इति वदत**

(क) नेपालो रिपुजनवर्गे समुदारो वर्तते ।

(ख) नेपालो वीराणां भूमिरस्ति ।

(ग) नेपालिजना अतिथीन् देवतुल्यान् व्यवहरन्ति ।

(घ) नेपालदेशे एकविधा एव संस्कृतिः प्रचलति ।

(ङ) नेपालस्य प्राकृतसौन्दर्यं पर्यटकानां मनो हरति ।

१०. **श्रवणपाठस्य श्रवणेन परस्परं मेलयित्वा वाक्यानि कथयत**

| | |
|---|---|
| भाषा | वर्णोच्चारणविधिरुपदिष्टोऽस्ति । |
| जिह्वा | विश्वस्य महान् वैयाकरणो भाषाविच्च आसीत् । |
| पाणिनिः | ध्वन्याश्रिता भवति । |
| भाषाविज्ञाने | सर्वविधभाषाणां वैज्ञानिकमध्ययनं क्रियते । |
| पाणिनीयशिक्षाग्रन्थे | ध्वनिजनकमेकं शरीराङ्गं वर्तते । |

## पठनम्

१. **पाठस्थगानात् पूर्वं प्रदत्तस्यानुच्छेदस्य मौनपठनं विधाय क्रियापदानि रेखाङ्कितानि कुरुत ।**

२. **पाठस्थं गीतं पठित्वा अज्ञातार्थानि पदानि रेखया परिवेष्टयत ।**

**३. प्रदत्तमनुच्छेदं पठित्वा तदनुवर्तिनः प्रश्नान् उत्तरयत**

देवनागरी भारतीयभाषाणां प्रमुखा लिपिर्वर्तते । काश्चन वैदेशिकभाषा अपि अनया लिप्या उपनिबद्धाः प्राप्यन्ते । भारतीयभाषासु संस्कृत-पालि-हिन्दी-सिन्धी-बोडो-मराठी-कोङ्कणी-कस्मिरी- डोगरी-नेपाली-तामाङ-गढवाली-भोजपुरी-मैथिली-सन्थाली-अङ्गिका-मगध्यादिभाषासु देवनागरीलिपेः प्रयोगो दृश्यते । एतदतिरिक्ता अपि कतिपयभाषायाः प्रयोक्तारः स्वभाषाया पृथग् लिप्यां सत्यामपि देवनागरीलिपेरपि प्रयोगं कुर्वाणाः सन्ति । देवनागरीलिप्याम् आहत्य त्रिषष्टिः (चतुषष्टिर्वा) वर्णाः सन्ति । तेषु स्वराः, व्यञ्जनानि, अयोगवाहाश्च वर्तन्ते । अस्या लिपेः प्रत्येकं वर्णस्य शुद्धोच्चारणविधिः शास्त्रे वर्णितो वर्तते । स्वरवर्णा अन्येषां साहाय्यमनपेक्ष्य स्वयमेव उच्चार्यन्ते इति कृत्वा 'स्वयं राजन्ते' इति तस्य व्युत्पत्तिः । व्यञ्जनानि तु सुखोच्चारणे स्वराणां सहायतां गृह्णन्ति । अस्यां लिपौ स्वरव्यञ्जनयोः संयोजनेन अक्षराणि निर्मीयन्ते । व्यञ्जनेन सह संयोजनेन स्वराः चिह्नरूपेण स्वस्वरूपं परिवर्तन्ते । स्वरेण हीनो व्यञ्जनो हलन्तो भवति । अनुस्वारविसर्गादयः अयोगवाहाश्च स्वरात् पश्चादेव आगच्छन्ति । अस्यां लिपौ अक्षराणां क्रमव्यवस्थायाम् (विन्यासे) वैज्ञानिकपद्धतिरनुसृता अस्ति । 'यथा उच्चारणं तथैव लेखनम्' अस्या लिपेर्वैशिष्ट्यं वर्तते । अस्याम् उच्चारणस्य काल-स्थान-प्रयत्नाधारेण वर्णानां विभाजनं विविधरीत्या विहितं विद्यते । स्वरवर्णा ह्रस्व-दीर्घ-प्लुतभेदैः, उदात्तानुदात्त-स्वरितभेदैः, अनुनासिकाननुनासिकभेदयोश्च वर्गीकृताः सन्ति । तथैव स्पर्शाः, अन्तःस्थः, ऊष्माः, अल्पप्राणकः, महाप्राणकः, अनुनासिक्य इत्यादिभिर्भेदैर्व्यञ्जनानामपि वर्गीकरणं वैज्ञानिकरीत्या कृतमुपलभ्यते । लिपिरियं देवनगरे उपयुज्यमाना आसीदिति कारणेन देवनागरीनाम्ना प्रसिद्धा जाता इति मतं वर्तते ।

(क) संस्कृतभाषा कया लिप्या उपनिबद्धा वर्तते ?

(ख) देवनागरीलिप्यां कति वर्णाः सन्ति ?

(ग) व्यञ्जनवर्णाः कथमुच्चर्यन्ते ?

(घ) देवनागरीलिप्याम् अक्षरनिर्मितिप्रकारः कः ?

(ङ) संयुक्ताक्षरेषु कयोः संयोगो भवति ?

(च) ह्रस्वादिभेदाः स्वराणां व्यञ्जनानां वा ?

(छ) अयोगवाहाः कथं प्रयुज्यन्ते ?

(ज) देवनागरीलिपेः किं वैशिष्ट्यम् ?

**४. पाठस्थगीतस्य प्रथमस्य पङ्क्तिद्वयस्य अन्वयं सरलार्थं च सस्वरं पठत ।**

**५. पाठस्य आदौ प्रदत्तमनुच्छेदं पठित्वा प्रश्नान् उत्तरयत**

(क) अस्माकं जन्मभूमेः नाम किम् ?

(ख) स्वदेशः अस्मान् किं किं ददाति ?

(ग) मानवतायाः सम्मानकर्तारः के ?

(घ) नागरिकाणां हृदये किं तिष्ठति ?

(ङ) स्वर्गादपि गरीयसी का ?

(च) अस्माकं यशः कुत्र प्रसृतं वर्तते ?

(छ) अस्माकम् आतिथ्यपरम्परा कीदृशी विद्यते ?

(ज) अतिथीनां सत्कारः कथं करणीयः ?

६. **पाठं पठित्वा अव्ययपदानि अन्विषत ।**

७. **पाठस्थगीतं पठित्वा प्रदत्तानां प्रश्नानामुत्तरं लिखित्वा पठत**

(क) अस्माकं देशः कस्मिन् विकरालो वर्तते ?

(ख) लोकाः कुत्र कथं वर्धन्ताम् ?

(ग) नेपालः केन नाम्ना विख्यातः ?

(घ) अस्माकं देशे किं किं राजताम् ?

(ङ) अस्माभिः कः त्यक्तव्यः ?

८. **पाठं पठित्वा अस्माकं पूर्वजानां विषये त्रीणि वाक्यानि कथयत ।**

९. **अधस्तनं विवरणं पठित्वा प्रतिवर्णमूर्जाक्षेत्रं सारिण्यां प्रदर्श्य मित्रैः सह वर्णानां शुद्धोच्चारणाभ्यासं कुरुत**

ऋषीणां तन्त्रेषु मन्त्रेषु च उपदिष्टं वर्तते- अकारस्य उच्चारणाद् ललाटे ऊर्जा सञ्चरति । एवम् आकारस्य उच्चारणेन मुखपटले ऊर्जा सञ्चरति । एवमेव इकाराद् दक्षिणनेत्रे । ईकाराद् वामनेत्रे,उकाराद् दक्षिणकर्णे, ऊकाराद् वामकर्णे, ऋकाराद् दक्षिणनासापुटे, ॠकाराद् वामनासापुटे, लृकाराद् कपोलयोः, एकाराद् उत्तरोष्ठे, ऐकाराद् अधरोष्ठे, ओकाराद् उपरिदन्तेषु, औकाराद् अधोदन्तेषु, अं इति अनुस्वारस्य उच्चारणद् मूर्ध्नि, अः इति विसर्गस्योच्चारणाद् मुखे ऊर्जायाः सञ्चारो भवति ।

अक्षरविज्ञा मनीषिणः पूर्वजाः प्रत्यपादयन् यत् स्वराणामिव व्यञ्जनानाम् उच्चारणेन अपि शरीरस्य अनेकेषु भागेषु ऊर्जा प्रवहति । तानि च स्थानानि यथा- ककारस्योच्चारणाद् दक्षिणस्कन्धे बाहुसन्धौ च ऊर्जा सञ्चरति । खकाराद् दक्षिणकूर्परे, गकाराद् वामस्कन्धे, घकाराद् दक्षिणहस्ताङ्गुलिमूलेषु, ङकाराद् दक्षिणहस्ताङ्गुल्यग्रेषु, चकाराद् वामस्कन्धसन्धौ, छकाराद् वामकूर्परे, जकाराद् वामनाड्याम्, झकाराद् वामहस्ताङ्गुलिमूलेषु, ञकाराद् वामहस्ताङ्गुल्यग्रेषु, टकाराद् दक्षिणनितम्बे, ठकाराद् दक्षिणजानुनि, डकाराद् दक्षिणगुल्फे , ढकाराद् दक्षिणपादाङ्गुलिमूलेषु, णकाराद् दक्षिणपादाङ्गुल्यग्रेषु, तकाराद् दक्षिणनितम्बसन्धौ, थकाराद् वामजानुनि, दकाराद् वामगुल्फे, धकाराद् वामपादाङ्गुलिमूलेषु, नकाराद् वामपादाङ्गुल्यग्रेषु, पकाराद् पृष्ठवक्षसोः दक्षिणभागे, फकाराद् पृष्ठवक्षसोः वामभागे, बकाराद् पृष्ठभागे, भकाराद् नाभौ, मकाराद् उदरे, यकाराद् हृदये, रकाराद् दक्षिणस्कन्धस्योपरिभागे, लकाराद् स्कन्धपाश्र्वयोः, वकाराद् वामस्कन्धस्योपरिभागे, शकाराद् हृदयदक्षिणहस्तयोर्मध्ये, षकाराद् हृदयवामहस्तयोर्मध्ये, सकाराद् हृदयदक्षिणपादाङ्गुष्ठयोर्मध्ये, हकाराद्

हृदयवामपादाङ्गुष्ठयोर्मध्ये, लकाराद् हृदयतः पादाङ्गुष्ठपर्यन्तम्, क्षकाराद् हृदयतः उदरपर्यन्तम् ऊर्जायाः सञ्चारो भवतिः त्रज्ञयोः ऊर्जाक्षेत्रं निर्दिष्टं नास्ति ।

वर्णानामक्षराणां च यथाविधि उच्चारणमात्रेण अपि अस्माकं शरीरस्य सम्यग् व्यायामो भवति । वर्णव्यायामो नीरुजस्य कारणमपि भवितुमर्हति । वर्णव्यायामस्य सातत्येन अभ्यासेन कतिपयरोगा निराकर्तुं च शक्यन्ते । अतः एतादृशानामक्षराणां शुद्धोच्चारणस्य सातत्यपरम्परा संरक्षणीया । एतेषां सर्वेषामपि शुद्धतया उच्चारणस्य लेखनस्य च अभ्यासः अनवरुद्धो विधेयः । अस्माकं लौकिकोच्चारणे नास्तीति मत्वा अक्षरेषु अपाकृतेषु शरीरे ऊर्जा कथं सञ्चरेत् ?

पुर्खाको तान्त्रिक, मान्त्रिक एवं चिकित्सकीय ज्ञानले भन्यो- 'अ' को उच्चारणले निधारको ऊर्जा प्रवाहित गर्छ । 'आ'ले अनुहारको, 'इ'ले दाहिने आँखाको, 'ई'ले देब्रे आँखाको, 'उ'ले दाहिने कानको, 'ऊ'ले देब्रे कानको, 'ऋ'ले दाहिने नाकको, 'ॠ'ले देब्रे नाकको, 'लृ'ले दाहिने र देब्रे गालाको, 'ए'ले माथिल्लो ओठको, 'ऐ'ले तल्लो ओठको, 'ओ'ले माथिल्लो दाँतको । 'औ'ले तल्लो दाँतको । 'अं'ले मूर्धन्य स्थानको, अःले मुखको ऊर्जा प्रवाहित गर्छ ।

देवनागरीको मर्म बुझेका पुर्खाले भने- स्वर अक्षरले झैँ व्यञ्जन अक्षरले पनि शरीरमा ऊर्जा प्रवाह गर्ने स्थानहरू छन् । ती स्थानहरू हुन्- 'क' अक्षरको उच्चारणले दाहिनेतर्फको काँध र पाखुरा जोडिएको ठाउँमा ऊर्जा प्रवाह गर्छ । 'ख'ले दाहिने कुहिनुमा । 'ग'ले दाहिने काँधमा । 'घ'ले दाहिने हातका औँलाको फेदमा । 'ङ'ले दाहिने हात र औँलाका टुप्पाहरूमा । 'च'ले देब्रे काँधको जोर्नीमा । 'छ'ले देब्रे कुहिनुमा । 'ज'ले देब्रे नाडीमा । 'झ'ले देब्रे हातको औँलाका फेदमा । 'ञ'ले देब्रे हातका औँलाका टुप्पामा । 'ट'ले दाहिने नितम्ब (हीप) को जोर्नीमा । 'ठ'ले दाहिने घुँडामा । 'ड'ले दाहिने गोलीगाँठामा । 'ढ'ले दाहिने खुट्टाको औँलाको फेदमा । 'ण'ले दाहिने खुट्टाकै औँलाको टुप्पामा । 'त'ले देब्रे नितम्बको जोर्नीमा । 'थ'ले देब्रे घुँडामा । 'द'ले देब्रे गोलीगाँठोमा । 'ध'ले देब्रे खुट्टाका औँलाको फेदमा । 'न'ले देब्रे खुट्टाकै औँलाको टुप्पामा । 'प'ले ढाड र छातीको दाहिने पातोमा । 'फ'ले ढाड र छातीको देब्रे पातोमा । 'ब'ले पिठ्युँमा । 'भ'ले नाभिमा । 'म'ले पेटमा । 'य'ले मुटुमा । 'र'ले दाहिने काँधको माथिल्लो भागमा । 'ल'ले गर्दनभन्दा तलको काँधका पाताहरूमा । 'व'ले देब्रे काँधको माथिल्लो भागमा । 'श'ले मुटुदेखि दाहिने हातसम्मको क्षेत्रमा । 'ष'ले मुटुदेखि देब्रे हातसम्मको क्षेत्रमा । 'स'ले मुटुदेखि दाहिने खुट्टाको बुढीऔँलासम्मको भागमा । 'ह'ले मुटुदेखि खुट्टाको बुढी औँलासम्ममा । 'ल'ले मुटुदेखि अनुहारको परिधिसम्मको क्षेत्रमा । 'क्ष'ले मुटुदेखि पेटसम्म ऊर्जाको सञ्चार हुन्छ । 'त्र' र 'ज्ञ'को भने ऊर्जा क्षेत्र तोकिएको छैन ।

वर्ण र अक्षरहरूको विधिपूर्वक उच्चारण मात्रले पनि हाम्रो शरीरको राम्रो व्यायाम हुन्छ । वर्णव्यायाम निरोगिताको कारण पनि हुन सक्छ । वर्णव्यायामको निरन्तर अभ्यासले कतिपय रोगहरू निको हुन्छन् । त्यसैले यस्ता अक्षरहरूको शुद्धोच्चारणको अविच्छिन्न परम्परालाई संरक्षण गर्नुपर्छ । यी सबै अक्षरको शुद्ध उच्चारण र लेखनको अभ्यासलाई अवरुद्ध हुन दिनुहुँदैन । हाम्रो जिब्रोमा अभ्यस्त छैन भन्दैमा अक्षरहरूको वास्तविक स्वरूपलाई बिगार्ने हो भने शरीरमा ऊर्जा कसरी प्रवाहित होला ?

## लेखनम्

१. **पुस्तकस्य शब्दकोशस्य वा साहा···येन प्रदत्तानां पदानामर्थं लिखत**

विलसन्तु, विकरालः, विख्यातः, ज्ञानमयूखैः, पुरतः, आतिथ्यम्, ऐक्यम्, धीराणाम् ।

२. **कक्षायां विमृश्य अधस्तनपदानां विभक्तिवचने अन्विषत**

गोर्खानाम्ना, हरितैः, ज्ञानमयूखैः, रिपुजनवर्गे, लोकाः, अस्माभिः ।

यथा- वीराणाम् = षष्ठी, बहुवचनम् ।

३. **अधस्तनपदेषु प्रयुक्तान् उपसर्गान् निर्दिशत**

समुदारः, विकरालः, उन्नतः, सुरम्यः, विख्यातः, संस्कृतिः, सन्दीप्तः, सन्त्यज्य, आयान्तु, विलसन्तु ।

४. **'नेपालः' इति कर्तृपदं प्रयुज्य प्रदत्ताद् गीतांशाद् चत्वारि वाक्यानि रचयत**

हरितैर्वनोपवनादिभिः, उन्नतगिरिवरसन्ततिभिः
सुरम्यदेशो नेपालः, बहुविधमानवसंस्कृतिभिः
गोर्खानाम्ना विख्यातः, जन्मधरा यो वीराणाम्
ज्ञानमयूखैः सन्दीप्तः, कर्मधरा वै धीराणाम् ॥

यथा- नेपालो वीराणां जन्मधरा वर्तते ।

५. **अधस्तनपदानां स्वकीये वाक्ये प्रयोगं दर्शयत**

पुरतः, वै, विलसन्तु, समुदारः, कर्मधरा, सन्दीप्त, सन्त्यज्य ।

६. **नेपालः कीदृशो वर्तते ? पाठाधारेण पञ्चसु वाक्येषु लिखत ।**

७. **पाठस्थगीते 'नेपालः' इति विशेष्यपदस्य कृते कति विशेषणपदानि प्रयुक्तानि सन्ति ? कानि च तानि ?**

८. **पाठमाधृत्य नेपालिजनानां प्रमुखवैशिष्ट्यानि सूत्ररूपेण लिखत ।**

९. **'अतिथिदेवो भव' इति विषये शिक्षकात् सामाजिकसञ्जालादिमाध्यमेन च विवरणान् सङ्कलय्य अनुच्छेदमेकं लिखत ।**

## व्याकरणानुशीलनम्

१. **प्रदत्तां सारिणीं विलोक्य अधस्तनान् प्रश्नान् उत्तरयत**

<table>
<tr><th colspan="5">स्वरवर्णाः (अच्)</th></tr>
<tr><th>ह्रस्वाः</th><th>दीर्घाः</th><th>प्लुताः</th><th colspan="2">अयोगवाहौ</th></tr>
<tr><td rowspan="2">अ इ उ ऋ ऌ<br><br>(एकमात्राः)</td><td rowspan="2">आ ई ऊ ॠ ए<br>ओ ऐ औ<br>(द्विमात्राः)</td><td rowspan="2">अ३ इ३ उ३ ऋ३ ऌ३<br>ए३ ओ३ ऐ३ औ३<br>(त्रिमात्राः)</td><td>अनुस्वारः</td><td>विसर्गः</td></tr>
<tr><td>अं ( ं )<br>(पादमात्रः)</td><td>अः ( ः )<br>(पादमात्रः)</td></tr>
</table>

<table>
<tr><th colspan="5">व्यञ्जनवर्णाः (हल्)<br>(अर्धमात्राः)</th></tr>
<tr><th colspan="2">स्पर्शाः</th><th>अन्तःस्थाः</th><th>ऊष्माणः</th><th>संयुक्तवर्णाः</th></tr>
<tr><td>कवर्गः</td><td>क् ख् ग् घ् ङ्</td><td rowspan="5">य् व् र् ल्</td><td rowspan="5">श् ष् स् ह्</td><td rowspan="5">क्ष् त्र् ज्ञ्<br>(क्ष = क्+ष्+अ<br>त्र = त्+र्+अ<br>ज्ञ = ज्+ञ्+अ)</td></tr>
<tr><td>चवर्गः</td><td>च् छ् ज् झ् ञ्</td></tr>
<tr><td>टवर्गः</td><td>ट् ठ् ड् ढ् ण्</td></tr>
<tr><td>तवर्गः</td><td>त् थ् द् ध् न्</td></tr>
<tr><td>पवर्गः</td><td>प् फ् ब् भ् म्</td></tr>
<tr><th colspan="5">अनुनासिकवर्णाः (नासिक्याः)</th></tr>
<tr><td colspan="5">ङ् ञ् ण् न् म् (नित्यमनुनासिकाः)<br>यँ् वँ् लँ्<br>अँ आँ अँ३ इँ ईँ........ (सर्वे स्वराः)</td></tr>
<tr><th colspan="5">व्यञ्जन-स्वरसंयोजनेन निर्मितानि अक्षराणि</th></tr>
<tr><td colspan="5">क का कि... ख खा... गृ घि... चु ज' टौ मो क्ष त्री ज्ञे द्यु द्व द्धा प्र श्री... कँ यं शः तिः... इत्यादीनि</td></tr>
</table>

**(अ) प्रश्नानामुत्तरं लिखत**

(क) स्वरवर्णाः के सन्ति ?

(ख) ह्रस्ववर्णाः के ? के च दीर्घाः ?

(ग) प्लुतस्वरस्य उच्चारणकालः कतिमात्रिकः ?

(घ) दीर्घाः कतिमात्रिकाः भवन्ति ?

(ङ) केषामुच्चारणसमय एकमात्रापरिमितो निर्धारिता वर्तते ?

(च) व्यञ्जनानि कति सन्ति ? कानि च तानि ?

(छ) अन्तःस्थाः के ?

(ज) चवर्गे के वर्णा समायान्ति ?

(झ) क्षवर्णे कयोर्व्यञ्जनयोः संयोगो वर्तते ?

(ञ) 'का' इति अक्षरे व्यञ्जन-स्वरवर्णौ कौ ?

**(आ) कोष्ठकात् समुचितपदं विचित्य रिक्तस्थानं पूरयत**

(क) 'ज्ञ' इति अक्षरे ...................... वर्णयोः संयोगो विद्यते । (कषयोः, जञयोः)

(ख) ककार-इकारयोर्मेलनेन ...................... अक्षरं भवति । (कि, की)

(ग) 'द्रु' इत्यत्र ...................... इति वर्णक्रमः । (र् द् उ, द् उ र्, द् र् उ)

(घ) अनुस्वार-विसर्गौ ...................... स्तः । (योगवाहौ, अयोगवाहौ)

(ङ) 'हरिः' इत्यस्यान्ते ...................... अस्ति । (विसर्गः, अनुस्वारः)

(च) ...................... अनुनासिकवर्णो वर्तते । (ध्, न्)

(छ) प्, ग्, ड् एते वर्णाः ...................... सन्ति । (अनुनासिकाः, अननुनासिकाः)

(ज) ए, ओ, ऐ, औ वर्णानाम् ...................... न भवति । (ह्रस्वभेदः, दीर्घभेदः)

(झ) शषसहाः ...................... सन्ति । (अन्तःस्थसंज्ञकाः, ऊष्मसंज्ञकाः)

(ञ) सर्वे ...................... अननुनासिका अनुनासिकाश्च भवन्ति । (स्वरवर्णाः, व्यञ्जनवर्णाः)

**(इ) प्रदत्तवाक्यानां युक्तत्वायुक्तत्वे समुचितचिह्नाभ्यां विचारयत**

(क) बकारः टवर्गीयो वर्णो वर्तते ।

(ख) शवर्णः स्पर्शसंज्ञकोऽस्ति ।

(ग) 'त्री' इत्यत्र त् र् ई वर्णाः सन्ति ।

(घ) व्यञ्जनवर्णो हल् अपि कथ्यन्ते ।

(ङ) स्पर्शसंज्ञकेषु पञ्चसु वर्गेषु प्रतिवर्गं चत्वारो वर्णा आयान्ति ।

## २. उदाहरणमनुसृत्य पदस्थान् वर्णान् विश्लेषयत

यथा- श्रीमन्तः = श् र् ई म् अ न् त् अः ।

विज्ञेयम् = व् इ ज् ञ् ए य् अ म् ।

द्विवचनम् = द् व् इ व् अ च् अ न् अ म् ।

क्षेत्रपालः, प्रज्ञा, विद्योत्तमा, द्वात्रिंशत्, अङ्गवस्त्रम्, श्रेयस्करः, चिद्रूपम्, उद्देश्यम्, सिद्धान्तः, वर्तामहे ।

## ३. उदाहरणानुसारेण वर्णसम्मेलनं कुरुत

यथा- त् ऋ ष् ण् आ = तृष्णा ।

व् इ द् व् आं स् अः = विद्वांसः ।

य् अ ज् ञ् अ क् अ र् म् म् अ ण् इ = यज्ञकर्म्मणि

(क) क् र् ई ड् अ न् अ म् = ............................ ।

(ख) श् र् अ द् ध् अ य् आ = ............................. ।

(ग) व् य् आ प् न् ओ त् इ = ............................. ।

(घ) ग् आ त् र अ प् र् अ क् ष् आ ल् अ न् अ म् = ............................. ।

(ङ) अ न् त् आ र् अ र् आ ष् ट् र् ई य् अः = ............................. ।

## रचनात्मकः अभ्यासः

**१. शिक्षकात् अर्थबोधं कृत्वा अधस्तनगानमाधारीकृत्य एकेनानुच्छेदेन नेपालं वर्णयत ।**

दिव्यधुनिभिः क्षालितचरणाम्, अमरगणैः कृतसेवाम्,
जनकजानकीबुद्धविभूषितभव्यदर्शनां वन्दे ।
नेपालजननीं वन्दे ।
रविशशिशोभितराष्ट्रपताकां वेदविहितहितमार्गाम्,
हिमगिरिमुकुटां पशुपतिहृदयां विश्वनमस्यां वन्दे ।
नेपालजननीं वन्दे ।

**२. नेपालदेशस्य आतिथ्यपरम्पराबोधकं चित्रं निर्माय कक्षाकोष्ठस्य भित्तौ संश्लेषयत ।**

**३. चित्रवर्णनं कुरुत**



४. **अधस्तनम् अनुच्छेदं पठित्वा सारांशं लिखत ।**



सर्वेषां देशानां परिचायको ध्वजो भवति । अस्माकं देशस्यापि ध्वजो वर्तते । बहुशो देशानां ध्वजाः चतुष्कोणात्मकाः सन्ति परन्तु अस्माकं देशस्य ध्वजो द्वित्रिकोणात्मको वर्तते । अस्यां रक्तः श्वेतो नीलः इति त्रयोः रङ्गाः सन्ति । अस्माकं ध्वजायाम् ऊर्ध्वत्रिकोणे अर्धचन्द्रः अधःत्रिकोणे सूर्यः अङ्कितो वर्तते । चन्द्रसूर्यौ श्वेतवर्णे अङ्कितौ स्तः । प्रकाशरूपिणौ चन्द्रसूर्यौ प्रज्ञायाः चेतनायाश्च प्रतीकौ मन्येते । इत्येव न, वयं शत्रूणां कृते सूर्य इव प्रचण्डाः सज्जनानां कृते तु चन्द्र इव शीतलाः स्मः, इति ध्वजे निहिताभ्यां चन्द्रसूर्याभ्यां सङ्केतितः अर्थः । एतस्मात् यावत् आकाशे चन्द्रसूर्यौ भविष्यतः तावत् अस्माकं देशः स्थास्यति इति अपि ज्ञातुं शक्यते । ध्वजस्य तटीयभागे दृश्यमानः नीलवर्णः शान्तिप्रतीको मन्यते । वयं हिंसां रक्तपातम्, युद्धम्, विनाशं च नेच्छामः । बुद्धदेशस्थाः वयं सर्वदा शान्तिप्रियाः स्म इति ध्वजो वर्तमानेन नीलवर्णेन ज्ञायते । त्रिकोणान्तभागे तु रक्तवर्णः दृश्यते । प्राचीनकालात् नेपाले अयमेव ध्वजः प्रयोगे आसीत् । तदानीं केतुशब्देन बोधो भवति स्म । अस्माकं ध्वजा नेपालीजनानां नेपालस्य च प्रतीकमस्ति ।

सबै देशको परिचायक झन्डा हुन्छ । हाम्रो देशको पनि झन्डा छ । धेरै देशका झन्डा चारकुने छन् तर हाम्रो देशको झन्डा द्वित्रिकोणात्मक छ । यसमा रातो, सेतो र नीलो तीनथरी रङ छन् । माथिल्लो त्रिकोणमा अर्धचन्द्र र तल्लो त्रिकोणमा सूर्य अङ्कित छ । हाम्रो झन्डामा चन्द्र र सूर्य सेतो रङमा अङ्कित छन् । प्रकाशलाई बुझाउने चन्द्र र सूर्य प्रज्ञा वा चेतनाको प्रतीक मानिन्छन् । यति मात्र होइन, हामी शत्रुका लागि सूर्य झैँ प्रचण्ड र सज्जनका लागि चन्द्र झैँ शीतल छौँ भन्ने कुरा झन्डामा रहेको चन्द्रसूर्यबाट सङ्केत पाइन्छ । यसबाट जबसम्म आकाशमा चन्द्र र सूर्य रहने छन् तबसम्म हाम्रो देश रहिरहने छ भन्ने कुरा पनि जान्न सकिन्छ । झन्डाको किनारमा देखिएको निलो वर्ण शान्तिको प्रतीक हो । हामी हिंसा, रक्तपात, युद्ध र विनाश चाहँदैनौँ । बुद्धको देशका हामी सधैँ शान्तिप्रिय छौँ भन्ने कुरा झन्डामा भएको निलो वर्णबाट बुझिन्छ । त्रिकोणको बिच भागमा चाहिँ रातो वर्ण देखिन्छ । प्राचीन कालदेखि नै नेपालमा यही झन्डा प्रयोगमा थियो । त्यो बेला केतु शब्दले झन्डालाई बुझिन्थ्यो । हाम्रो झन्डा नेपाली जनता र नेपालको प्रतीक हो ।

## श्रवणपाठः

भाषाया अध्ययनस्य प्रमुखो विषयो ध्वनिर्विद्यते । सम्पूर्णा भाषा ध्वन्याश्रिता भवति । अत एव भाषाविज्ञाने ध्वनेरध्ययनस्य महत्त्वपूर्णं स्थानं भवति। ध्वनिविज्ञाने मानवशरीरस्य उच्चरणोपयोगिनाम् अवयवानां परिचयः क्रियते । स्वरयन्त्रम्, मुखम्, जिह्वा, ताल्वादिकं च वर्णध्वनीनां जननाय प्रमुखानि अङ्गानि सन्ति । ध्वनीनाम् उच्चारणस्थानस्य, उच्चारणप्रयत्नस्य दृष्ट्यापि वर्गीकरणं क्रियते। विश्वस्य महान् वैयाकरणो भाषाविच्चेति पदवीमलङ्कृतेन महर्षिणा पाणिनिना शिक्षाग्रन्थे कण्ठताल्वादीनां वर्णध्वनीनामुत्पत्तिस्थानानाम्, विविधप्रयत्नानां चोपदेशो विहितोऽस्ति। तेन प्रत्येकं वर्णध्वनेरुच्चारणविधिश्च शिक्षितो वर्तते। वर्णध्वनिषु कदा कदा केन केन प्रकारेण विकासः सञ्जात इत्यपि ध्वनिविज्ञानस्य विषयो भवति । ध्वनिविज्ञानं ध्वनिविकासमासृत्य काँश्चन निश्चितान् नियमानपि निर्धारयति । उच्चारणावयवाः, ध्वनीनां सङ्ख्या, ध्वनीनां वर्गीकरणम्, ध्वनिनियमाः, ध्वनिविकाराणां दिशः तत्कारणानि च ध्वनिविज्ञानस्य प्रमुखविषयाः सन्ति । भाषाविज्ञाने न केवलं ध्वनिविज्ञानम् अपि तु पदविज्ञानम्, वाक्यविज्ञानम्, अर्थविज्ञानं च अन्तर्भवन्ति । भाषाविज्ञानां भाषायाः तत्त्वानि सङ्कलय्य तदाधारेण सिद्धान्तान् निर्धारयन्ति । अस्मिन् ध्वनीनामुच्चारणस्य, अक्षर-शब्द-पद-वाक्यानां च संरचनाया विवेचनं क्रियते। भाषाविज्ञानं केवलं साहित्यसम्पत्तिसमृद्धाया एव भाषाया न, अपि तु साहित्यसम्पत्तिरहिताया अपि भाषाया वैज्ञानिकम् अध्ययनं करोति ।

द्वितीयः पाठः

# जनगणना

**पाठप्रवेशः**

जनगणनाया महाभियानम् ।
प्रचलति सकृत् प्रतिदशवर्षम् ॥

गणना नैषा जनस्य मात्रम्
सूच्यं सर्वं नैजविवरणम् ।
स्वीया जातिः, भाषा, धर्मः
रोच्यं सर्वैः मौलिककर्म ॥

तवाऽपि गणना ममाऽपि गणनम्
भवेत् समेषां पञ्जीकरणम् ।
जनोऽपि एको मा त्यज्येत
जनोऽपि कश्चिन् नाऽऽवृत्येत ॥

जनगणनाया महाभियानम् ।
प्रचलति सकृत् प्रतिदशवर्षम् ॥

जनगणनाको महाअभियान प्रत्येक दश वर्षमा एक पटक सञ्चालन हुन्छ । यसमा मानिसको सङ्ख्याको मात्र गणना हुँदैन । यसमा आफ्ना सबै विवरण सूचीकरण गर्नुपर्छ । आफ्नो जाति, भाषा, धर्म र मौलिक कर्म सबैले रुचाउँछन् । जनगणनामा तपाईंको र मेरो पनि गणना हो । त्यसैले यसमा सबैको तोकिएको विवरण पञ्जीकरण होस् । जनगणनाको यस महान् अभियानमा कुनै व्यक्ति पनि नछुटून् र कसैको पनि दोहोरो गणना नहोस् ।

**मूलपाठः** **जनगणना**



(सम्प्रति आदेशं जनगणनाया बृहदभियानं प्रचलद् वर्तते । नेपालसर्वकारस्य तथ्याङ्कविभागेन एतदर्थं प्रतिगृहं जनगणकानां सुपरिवेक्षकाणां च परिचालनं कृतमस्ति । जनानां निर्दिष्टविवरणसङ्कलनक्रमे नुवाकोटजनपदस्य विदुरनगरपालिकायामवस्थितमेकं गृहं प्राप्तस्य जनगणकस्य गृहस्थेन सह संवाद एवमस्ति ।)

गणकः - नमो नमः ।

गृहस्थः - नमो नमः । अस्माकं गृहे भवतः स्वागतम् ।

गणकः - धन्यवादः । अहं जनगणनाकार्यार्थं भवतो गृहमागतवान् अस्मि । मम नाम विवेकः थारुः । अहं दाङजनपदस्य निवासी अस्मि । अस्माकं देशे इदानीम् आदेशं जनगणनाया महदभियानं प्रचलद् वर्तते । सम्प्रति अहं नेपालसर्वकारस्य तथ्याङ्कविभागेन नियुक्तो जनगणकोऽस्मि । भवान् अस्य गृहस्य स्वामिनं मेलयित्वा मम साहाय्यं विदधातु इति निवेदयामि ।

गृहस्थः - एवम् ! अयन्तु नितरां हर्षस्य विषयः । जनगणनाया महत्त्वविषये वयं बहुदिनेभ्यः सञ्चारमाध्यमैः शृण्वन्तः स्मः । आगच्छतु भवान् । गृहस्य अन्तः स्थित्वा वार्तालापं करवाव ।

गणकः - धन्यवादः । तथैव भवतु ।

गृहस्थः - अहमेव गृहस्वामी अस्मि । यत् किमपि आवश्यकं तत् प्रष्टुं शक्यम् ।

गणकः - भवतः गृहे द्वौ परिवारौ निवसतो वा ?

गृहस्थः - सत्यम् । भवान् एतत् कथं जानाति ?

गणकः - भवद्भिः पूर्वं प्रदत्तं विवरणमाधृत्य एव वदन्नस्मि । परह्यः अस्माकं प्रतिनिधिना अत्रागत्य गृह-परिवाराणां यद् विवरणं सङ्कलितमासीत् तद् मम पार्श्वे विद्यते । भवतः परिवारे कति सदस्याः सन्ति ?

गृहस्थः - मम परिवारे आहत्य सप्त सदस्याः सन्ति ।

गणकः - भवतः परिवारस्य सप्त एव सदस्याः प्रायः अत्रैव निवसन्ति वा ?

गृहस्थः - न । मम पुत्री वर्षद्वयाद् जापानदेशे पठन्ती अस्ति । मम अनुजश्च सर्वकारसेवायाम् अस्ति । तस्य कार्यालयो जनपदान्तरे वर्तते । स अवकाशदिने प्रतिसप्ताहं गृहम् आगच्छति । शेषाः पञ्च सदस्याः तु अत्रैव निवसामः । परम् अस्या वार्तायाः प्रयोजनं किम् ? परिवारस्य सर्वेषां सदस्यानां गणना नावश्यकं खलु ?

गणकः - सर्वेषां जनानां परिगणनमावश्यकम्, किन्तु यो यत्र बाहुल्येन निवसति, तस्य तत्रैव गणना कर्तव्या । प्रायेण गृहाद् अन्यत्र निवासं कुर्वतां जनानां विवरणस्य विस्तरेण सङ्कलनं तत्रैव भवति । अत्र तु तेषां केवलं सङ्ख्यामात्रस्य ज्ञानं तदपि अनुपस्थितसदस्यरूपेण क्रियते । यथा- अत्र भवतः पुत्र्या निर्दिष्टविवरणं 'विदेशेऽनुपस्थित-सदस्य'रूपेण पृथग्रीत्या पूरणीयम् । परं स्वदेशे एव गृहाद् बहिः स्थितस्य भवतः अनुजस्य त्वत्र 'स्वदेशेऽनुपस्थित-सदस्य'रूपेण सङ्केतमात्रं करणीयम् । अत्र प्रायेण निवसतां पञ्चानां सदस्यानामेव विवरणमत्र विस्तरेण सङ्गृह्यते ।

गृहस्थः - एवमस्ति ! साधु ।

गणकः - परिवारस्य प्रमुखः सदस्यः कः ?

गृहस्थः - मम पिता । स उपरि स्वप्रकोष्ठे शयानोऽस्ति । वृद्धावस्थायाः कारणेन इदानीं सः प्रायेण निष्क्रियो वर्तते ।

गणकः - जनगणनाया निमित्तं गृहस्य प्रमुखः सदस्यो वयसा न भवति । यः परिवारस्य आवश्यकतापूर्तये, समस्यानां समाधानाय च आधिक्येन दायित्वं वहति स एव परिवारप्रमुखः स्वीकर्तव्यो भवति ।

गृहस्थः - एवम् ! परिवारे एतादृशं दायित्वं तु अहमेव निर्वहामि । अतः मामेव परिवारप्रमुखं नियोजयतु ।

गणकः - आम् । भवतः नाम किम् ?

गृहस्थः - अहं श्रवणलालः ।

गणकः - पूर्णं नाम आवश्यकम् ।

गृहस्थः - श्रवणलालः श्रेष्ठः ।

गणकः - साधु । भवतः दूरभाषक्रमाङ्कः ?

गृहस्थः - नव, अष्ट, षट्, शून्यम्, नव, एकम्, नव, चत्वारि, षट्, सप्त ।

गणकः - परिवारेण प्रयुक्तस्य गृहस्य स्वामित्वं कीदृशं विद्यते ?

गृहस्थः - स्वकीयमेव गृहमिदम् ।

गणकः - भवतो गृहं संरचनया कीदृशं वर्तते ?

गृहस्थः - स्तम्भप्रणाल्या इष्टिकाभिर्निर्मितं सुदृढमिदं गृहम् ।

गणकः - भवतां पेयजलस्य प्रमुखं स्रोतः किम् ?

गृहस्थः - नलिका । नल-कूपमाध्यमेन जलमानीतं विद्यते ।

गणकः - पाकस्य कृते प्रायेण कस्य इन्धनस्य प्रयोगो भवति ?

गृहस्थः - प्रायेण वाष्पेन्धनस्य । कदाचित्तु विद्युदपि प्रयुज्यते ।

गणकः - प्रकाशस्य व्यवस्था प्रायेण केन भवति ?

गृहस्थः - प्रकाशस्य हेतोः विद्युतः प्रयोगो भवति ।

गणकः - परिवारे शौचालयस्य व्यवस्था कीदृशी वर्तते ?

गृहस्थः - शौचालयः स्वच्छीकरणसुविधया युक्तो विद्यते ।

गणकः - साधु । इदानीं प्रत्येकं सदस्यस्य नैजविवरणानि पञ्जीकरणीयानि । भवतः (श्रवणलालस्य) लिङ्गं किम् ? जन्मतिथिः कः ? वयश्च कति वर्षाणि ?

गृहस्थः - लिङ्गं पुरुषः । जन्मतिथिः एकोनत्रिंशदधिकद्विसहस्रतमस्य विक्रमवर्षस्य श्रावणमासस्य चतुर्थः दिवसः । वयः एकोनपञ्चाशद् वर्षाणि ।

गणकः - भवतो जातिः का ? धर्मश्च कः ? का च वैवाहिकी स्थितिः ?

गृहस्थः - जातिः नेवारः । धर्मः हिन्दुः । विवाहितोऽहम् ।

गणकः - वयसः कतमे वर्षे विवाहं कृतवान् भवान् ?

गृहस्थः - एकविंशतितमे वर्षे ।

गणकः - भवतां पूर्वजानां भाषा का आसीत् ?

गृहस्थः - संस्कृतम् । अस्माकं पूर्वजाः संस्कृतेनैव वार्तालापं कुर्वन्ति स्म ।

गणकः - साधु । भवतो मातृभाषा का ?

गृहस्थः - नेपालभाषा ।

गणकः - भवतो द्वितीया भाषा ?

गृहस्थः - नेपालिभाषा ।

गणकः - भवतः शैक्षिकयोग्यता ?

गृहस्थः - अहं स्नातकोत्तरपरीक्षां उत्तीर्णवान् अस्मि ।

गणकः - भवतोऽध्ययनस्य क्षेत्रम् ?

गृहस्थः - पशुविज्ञानम् ।

गणकः - भवान् अर्थोपार्जनाय कस्मिन् कर्मणि संलग्नो वर्तते ? तच्च कीदृशं कार्यम् ?

गृहस्थः - पशुपालनम् । व्यावसायिकं पशुपालनं मम प्रमुखं कर्म अस्ति । मम नैजव्यवसाये सम्प्रति सप्ततिः गावः शतमजाश्च पालिताः सन्ति । तासां पालनस्य हेतोः सप्त कर्मकरा नियोजिताः सन्ति । अहं यथावश्यकं तासां निरीक्षणं निर्देशनं च करोमि ।

गणकः - साधु । कर्मकरा अपि भवद्भिः सह एकस्यामेव पाकशालायां भोजनं कुर्वन्ति वा ? यदि तथा कुर्वन्ति चेत् तेषामपि गणना भवतः परिवारे एव भवितुमर्हति ।

गृहस्थः - न, तेषामस्मद्भिन्ना पाकशाला वर्तते परन्तु ते सर्वेऽपि एकस्या एव पाकशालाया भोक्तारः सन्ति । तेषां निवासश्च अस्मिन्नेव गृहे अधो वर्तते ।

गणकः - तर्हि तेषामेकः पृथक् परिवारो मन्यते । तेषां गणना तत्रैव भविष्यति । पाकशालाया भिन्नतायाः कारणेन तेषां समावेशो भवतां परिवारे न भवति ।

गृहस्थः - एवम् ! बहु समीचीनम् ।

गणकः - भवतां परिवारे अन्ये प्रायेण के निवसन्ति ?

गृहस्थः - मम पिता महानन्दः श्रेष्ठः । तस्य वयः चतुरशीतिवर्षाणि । माता रमिला श्रेष्ठः । तस्याः वयः सप्तसप्ततिवर्षाणि । मम पत्नी षट्चत्वारिंशद्वर्षीया माया श्रेष्ठः । सा सामुदायिकविद्यालये शिक्षणं करोति । मम पुत्रः त्रयोदशवर्षीयः सुदीपः श्रेष्ठः । स नवमकक्षायां पठति ।

गणकः - एतेषु कोऽपि विकलाङ्गो वर्तते वा ? यदि परिवारस्य कस्मिँश्चित् सदस्ये शारीरिकीं मानसीं वा विकलाङ्गतास्ति चेत् सङ्कोचेन विना कथयतु ।

गृहस्थः - न । परिवारे एतादृशी अवस्था नास्ति ।

गणकः - अस्तु । इदानीम् उक्तानां सर्वेषां सदस्यानां विवरणं विस्तरेण गणनापुस्तिकायां पूरणीयं भवति । प्रथमं मां महानन्दस्य जन्मतिथिं कथयतु ।

गृहस्थः - क्षम्यताम् । सर्वेषां सदस्यानां जन्मतिथिविषये मम ज्ञानमपूर्णं वर्तते । अतोऽहं सर्वेषां मेलनं भवता सह कारयामि । अद्य सर्वे गृहे एव सन्ति । एकशः तेषां विवरणं सङ्कलयतु । तदनु यदि कमपि विशेषं प्रष्टुमवशिष्यते चेदहं पुनरपि साहाय्यं विधास्यामि ।

गणकः - अस्तु । तथैव कुर्म । जनगणनाकार्यस्य सफलतायै सहयोगदानार्थं भवते, भवतां परिवाराय च हार्दं धन्यवादं व्याहरामि ।

गृहस्थः - स्वागतम् । एतत्तु अस्माकं कर्तव्यमेव । भवतेऽपि बहवो धन्यवादाः सन्तु ।

(अहिले देशभर जनगणनाको बृहत् अभियान चलिरहेको छ । यसका लागि नेपाल सरकार, तथ्याङ्क विभागले हरेक घरमा जनगणक र सुपरिवेक्षकहरू परिचालन गरेको छ । मानिसका तोकिएका विवरण सङ्कलन गर्ने क्रममा नुवाकोट जिल्लाको विदुर नगरपालिकामा रहेको एउटा घरमा पुगेका जनगणक र गृहस्थ बिचको संवाद यसप्रकार छ ।

गणक : नमस्कार ।

गृहस्थ : नमस्कार । हाम्रो घरमा तपाईंलाई स्वागत छ ।

गणक : धन्यवाद । म जनगणनाका लागि तपाईंहरूको घरमा आएको हुँ । मेरो नाम विवेक थारू हो । मेरो घर दाङ जिल्ला हो । हाम्रो देशमा अहिले देशभरि जनगणनाको महाअभियान चलिरहेको छ । अहिले म नेपाल सरकार, तथ्याङ्क विभागबाट खटिएको जनगणक (गणक) हुँ । घर मालिकसित मेरो भेट गराएर सहयोग गरिदिनुहुन अनुरोध गर्दछु ।

गृहस्थ : ए हो ! यो त निकै खुसीको कुरा हो । जनगणनाको महत्त्वबारे हामीले धेरै दिनदेखि सञ्चार माध्यममार्फत सुन्दै आएका छौँ । आउनुहोस्, घरभित्र बसेर कुरा गरौँ ।

गणक : धन्यवाद । त्यसै गरौँ ।

गृहस्थ : म नै घरमालिक हुँ । आवश्यक सबै कुरा सोध्न सकिन्छ ।

गणक : तपाईंको घरमा दुई ओटा परिवार बस्छन् हो ?

गृहस्थ : हो । तर तपाईंलाई यो कसरी थाहा भयो ?

गणक : तपाईंहरूले नै पहिले दिनुभएको विवरण हेरेर भन्दै छु । अस्ति हाम्रो प्रतिनिधि यहाँ आएर घर र परिवारको विवरण सङ्कलन गर्नुभएको थियो, त्यो अहिले मसित छ । तपाईंको परिवारमा कति जना हुनुहुन्छ ?

गृहस्थ : मेरो परिवारमा हामी कुल सात सदस्य छौँ ।

गणक : परिवारका सबै सात सदस्यको प्रायः बसोबास यहीँ नै छ ?

गृहस्थ : होइन । मेरी छोरी दुई वर्षदेखि जापानमा पढिरहेकी छिन् । भाइ सरकारी सेवामा छ । उसको कार्यालय अर्को जिल्लामा छ । ऊ बिदाको समयमा प्रत्येक साता घरमा आउँछ । बाँकी पाँच जना धेरैजसो यहीँ बस्छौँ । तर कुराको के अर्थ छ र ? परिवारका सबै सदस्यको गणना आवश्यक छ र ?

गणक : सबैको गणना आवश्यक छ तर जो जहाँ धेरैजसो बसोबास गर्दछ, उसको त्यहीँ नै गणना गर्नुपर्छ । घरभन्दा बाहिर धेरै बसोबास भएका व्यक्तिको विस्तृत विवरण त्यहीँ नै सङ्कलन

हुन्छ । यहाँ (घरमा) उनीहरूको सङ्ख्या मात्र उल्लेख गरिन्छ, त्यो पनि अनुपस्थित सदस्यको रूपमा । उदाहरणका लागि यहाँ तपाईंकी छोरीको तोकिएको विवरण 'विदेश गएका अनुपस्थित' सदस्यको रूपमा भर्नुपर्छ । तर स्वदेशमै घरबाहिर गरेका तपाईंका भाइको भने 'स्वदेशभित्र रहेका अनुपस्थित' सदस्यको रूपमा सङ्केत मात्र गर्नुपर्छ । यहाँ धेरैजसो बसोबास गर्ने पाँच सदस्यको विवरण भने विस्तृत रूपमा सङ्कलन गरिन्छ ।

गृहस्थ : त्यसो पो हो ! ठिक छ ।

गणक : परिवारको प्रमुख सदस्य (परिवार मूली) को हो ?

गृहस्थ : मेरा बुबा । उहाँ माथि आफ्नो कोठामा सुतिरहनुभएको छ । वृद्धावस्थाका कारण अहिले उहाँ प्रायः निष्क्रिय हुनुहुन्छ ।

गणक : जनगणना प्रयोजनका लागि परिवार मूली उमेरले हुँदैन । परिवारको आवश्यकता पूर्ति र समस्या समाधान जसले गर्दछ, त्यही नै परिवारको मूली हुन्छ ।

गृहस्थ : ए ! परिवारमा यस्तो दायित्व मैले नै निर्वाह गर्छु । त्यसैले मलाई नै परिवार मूली बनाउनुहोस् ।

गणक : हुन्छ । तपाईंको नाम के हो ?

गृहस्थ : म श्रवणलाल ।

गणक : पूरा नाम चाहिन्छ ।

गृहस्थ : श्रवणलाल श्रेष्ठ ।

गणक : ठिक छ । तपाईंको मोबाइल नम्बर ?

गृहस्थ : पश्यतु ।

गणक : तपाईंले प्रयोग गरेको घरको स्वामित्व कस्तो हो ?

गृहस्थ : यो हाम्रो आफ्नै घर हो ।

गणक : तपाईँको घरको संरचना कस्तो छ ?

गृहस्थ : फलामसहितको पिलरले बनाइएको, ढलान गरिएको, पक्की गारो भएको पक्की घर हो ।

गणक : परिवारको खानेपानीको प्रमुख स्रोत कुन हो ?

गृहस्थ : धारा । ट्याङ्कीमा सञ्चित पानी पाइप लगाएर ल्याइएको छ ।

गणक : परिवारमा खाना पकाउन अक्सर कुन इन्धनको प्रयोग गर्नुहुन्छ ?

गृहस्थ : प्रायः ग्याँसको प्रयोग हुन्छ । कहिलेकाहीँ विद्युत् पनि प्रयोग गरिन्छ ।

गणक : परिवारमा बत्ती बाल्न अक्सर के प्रयोग गर्नुहुन्छ ?

गृहस्थ : बत्ती बाल्न सधैँ बिजुलीको प्रयोग गर्छौं ।

गणक : परिवारले प्रयोग गर्ने शौचालय कस्तो छ ?

गृहस्थ : शौचालय सफाइ सुविधायुक्त (फ्लस भएको) छ ।

गणक : ठिक छ । अब प्रत्येक सदस्यको व्यक्तिगत विवरण भर्नुपर्छ । तपाईं (श्रवणलाल) को लिङ्ग, जन्ममिति र पूरा गरेको उमेर भन्नुहोस् ।

गृहस्थ : लिङ्ग पुरुष । जन्ममिति विक्रम संवत् २०२९ साल साउन ४ गते । उमेर ४९ वर्ष ।

गणक : तपाईंको जाति, धर्म र वैवाहिक स्थिति के के हो ?

गृहस्थ : जाति नेवार, धर्म हिन्दू, विवाहित ।

गणक : कति वर्षको उमेरमा विवाह गर्नुभयो ?

गृहस्थ : एक्काइसौँ वर्षमा ।

गणक : तपाईंको पुर्खाको भाषा के हो ?

गृहस्थ : संस्कृत । हाम्रा पुर्खा संस्कृतमै कुराकानी गर्नुहुन्थ्यो ।

गणक : राम्रो । तपाईंको मातृभाषा ?

गृहस्थ : नेपालभाषा ।

गणक : दोस्रो भाषा नि ?

गृहस्थ : दोस्रो भाषा नेपाली हो ।

गणक : तपाईंको शैक्षिक योग्यता ?

गृहस्थ : मैले स्नातकोत्तर उत्तीर्ण गरेको छु ।

गणक : अध्ययनको क्षेत्र ?

गृहस्थ : पशुविज्ञान ।

गणक : तपाईं कुन पेसामा संलग्न हुनुहुन्छ ?

गृहस्थ : पशुपालन । व्यावसायिक पशुपालन नै मेरो प्रमुख पेसा हो । मेरो यो निजी व्यवसायमा अहिले सत्तरी ओटा गाई र सय ओटा बाखा पालिएका छन् । तिनीहरूको पालनका लागि सात जना कामदार राखेको छु । म आवश्यकताअनुसार निरीक्षण र निर्देशन गर्छु ।

गणक : ठिक छ । कामदार पनि तपाइँहरूसित एउटै भान्सामा खान्छन् कि ? यदि त्यस्तो हो भने उनीहरूको पनि तपाइँकै परिवारमा गणना गर्नुपर्छ ।

गृहस्थ : होइन, उनीहरूको छुट्टै भान्सा छ तर उनीहरू सबै एउटै भान्सामा खान्छन् । उनीहरूको बसोबास भने यही घरमा तल्लो तलामा छ ।

गणक : त्यसो भए उनीहरूको एउटा छुट्टै परिवार मानिन्छ । उनीहरूको गणना त्यहीँ हुनेछ । भान्सा छुट्टै भएका कारण उनीहरूको गणना तपाइँको परिवारमा हुँदैन ।

गृहस्थ : ए त्यस्तो पो ! धेरै राम्रो ।

गणक : तपाइँको पारिवारमा अन्य सदस्य को-को हुनुहुन्छ ?

गृहस्थ : मेरा बुबा महानन्द श्रेष्ठ । उहाँको उमेर ८४ वर्ष । आमा रमिला श्रेष्ठ । उहाँ ७५ वर्षकी । मेरी पत्नी ४६ वर्षकी माया श्रेष्ठ । उनी सामुदायिक विद्यालयमा पढाउँछिन् । मेरो छोरा १३ वर्षको सुदीप श्रेष्ठ । ऊ नौ कक्षामा पढ्छ ।

गणक : यीमध्ये कसैमा अपाङ्गता छ ? यदि कुनै सदस्यमा कुनै पनि किसिमको शारीरिक वा मानसिक अपाङ्गता छ भने सङ्कोच नमानी भन्नुहोस् ।

गृहस्थ : छैन । परिवारमा यस्तो अवस्था छैन ।

गणक : ठिक छ । अब तपाइँले नाम बताउनु भएका सबै सदस्यको विवरण विस्तृत रूपमा गणना पुस्तिकामा भर्नुपर्छ । पहिले महानन्दको जन्ममिति भन्नुहोस् ।

गृहस्थ : माफ गर्नुहोला । सबै जनाको जन्ममितिबारे मलाई राम्रो ज्ञान छैन । त्यसकारण म तपाइँलाई सबैसित भेट गराउँछु । आज सबै जना घरमै छन् । क्रमैले उनीहरूको विवरण सङ्कलन गर्नुहोस् । त्यसपछि केही विशेष सोध्न बाँकी रहेमा म फेरि पनि सहयोग गर्ने नै छु ।

गणक : हुन्छ, त्यसै गरौँ । जनगणनाको सफलताका लागि सहयोग गर्नुभएकोमा तपाइँ र तपाइँको परिवारलाई हृदयदेखि नै धन्यवाद छ ।

गृहस्थ : स्वागत छ । यो त हाम्रो कर्तव्य नै हो । तपाइँलाई पनि धेरै धन्यवाद ।

## शब्दार्थः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| जनगणना | कस्मिँश्चिद् निश्चितभूभागे निश्चितकालान्तराले निवसतां जनानां सङ्ख्याया गणनेन सह निर्दिष्टविवरणानां पञ्जीकरणकार्यम् | जनगणना, कुनै निश्चित भूभागमा निश्चित समयको अन्तरालमा अक्सर बसोबास गर्ने मानिसको सङ्ख्या र उनीहरूको तोकिएको विवरण सङ्कलन गर्ने काम | Census |
| महाभियानम् | महदुपागमनम् | महान् अभियान | Big Campaign |
| गणना | गणनम्, सङ्ख्यानम् | गन्ने काम | Countation |
| नैषा (न+एषा) | न इयम् | यो होइन | It is not |
| जनः | मानवः, मनुष्यः | मानिस, व्यक्ति | Human |
| सूच्यम् | सूचनं कार्यम् | सूचना दिनुपर्छ | To be noticed |
| नैजः/स्वीयः | स्वकीयः, आत्मनः | आफ्नो | Self |
| विवरणम् | तथ्यम् | विवरण | Explanation |
| समः | सर्वः | सबै | All |
| पञ्जीकरणम् | नामाङ्कनम् | दर्ता | Ragistration |
| रोच्यम् | रोचनं कार्यम् | मन पराउनुपर्छ | To be liked |
| मा त्यज्येत | न मुञ्च्येत | नछुटोस् | Doesn't be remained |
| नावृत्येत (न+आवृत्येत) | पुनर्गणितो न भवेत् | नदोहोरियोस् | Doesn't be repeated |
| जनगणकः | जनगणनायां विवरणसङ्कलको जनः | गणक, जनगणनामा विवरण सङ्कलन गर्ने व्यक्ति | Data collector in census |
| गृहस्थः | गृही, गृहपतिः | घरबार गरेर बस्ने व्यक्ति, घर मालिक | The man with family, Owner of the house |
| जनपदः | मण्डलम् | जिल्ला, निश्चित आवादी भएको कुनै प्रशासनिक एकाइ | District, On of the administrative unit |

| | | | |
|---|---|---|---|
| स्वामी | पतिः | मालिक | Lord/Husband |
| विदधातु | करोतु | गर्नुहोस् | Let do |
| नितराम् | अतिशयेन | ज्यादै | Very much |
| अन्तः | आभ्यन्तरे | भित्र | Inside |
| पार्श्वे | समीपे | सित | With |
| आहत्य | सर्वं योजयित्वा, प्रसङ्ख्या | जम्मा, कुल | Total |
| प्रतिसप्ताहम् | प्रत्येकं सप्ताहे | हरेक साता | In every week |
| वार्ता | कथनम्, समाचारः | कुराकानी, समाचार | Talk, Convertation, News |
| बाहुल्येन | बहुत्वेन, बहुलतया, प्रायेण | धरैजसो, प्रायः | Usually, Plenty |
| परम्/किन्तु | परन्तु | तर | But |
| अनुपस्थितः | अप्राप्तः, नोपस्थितः | उपस्थित नभएको | Absent, Not present |
| जनपदान्तरः | अन्यो जनपदः | अर्को जिल्ला | Another district |
| परिवारप्रमुखः | परिवारपतिः, परिवारस्वामी | परिवार मूली | Head of the family |
| वयः | आयुः | उमेर | Age |
| दूरभाषप्रक्रमाङ्कः | दूरभाषणस्य क्रमाङ्काः | फोन नम्बर | Phone numbers |
| स्वामित्वम् | प्रभुत्वम्, प्रभुता | स्वामित्व | Ownership |
| लौहः | लोहः | फलाम | Iron |
| दृढः | अशिथिलः, प्रगाढः | बलियो, पक्की | Strong |
| समीकृतः | समानीकृतः | सम्म | Flat |
| कुटलम् | पटलम् | छानो | Roof |
| प्राकारः | वरणः, सालः | पर्खाल, गारो | Wall |
| वाष्पेन्धनम् | वायुरूपमिन्धनम् | खाना पकाउने ग्यास | Gas for cooking |
| पाकः | पाचनम् | खाना पकाउनु | Cooking |
| नलिका | नलेन जलपातनक्रिया, नलः | धारो, पाइप | Tap |

| | | | |
|---|---|---|---|
| नलः | नालः | पाइप | Pipe |
| जन्मतिथिः | जन्मनः तिथिः | जन्ममिति | Date of birth |
| पूर्वजाः | पूर्वकाले जाताः पितामहादयः | पुर्खा | Ancestors |
| विकलाङ्गः | स्वभावतो न्यूनाधिकाङ्गः, अपोगण्डः | अपाङ्गता भएको | Handicapped, Having disability |
| क्षम्यताम् | क्षमा क्रियताम् | माफी पाऊँ, माफ गर्नुहोला | Sorry, Excuse me |
| हार्दम् | स्नेहपूर्वकम्, हृदयतः | स्नेहपूर्वक, हृदयदेखि नै | Kindly, From the heart |
| व्याहरामि | कथयामि | व्यक्त गर्दछु | I express |

## अभ्यासः

### श्रवणं भाषणं च

१. **सखिभिः सह पदानामनूच्चारणं कुरुत**

नावृत्येत, एतत्तु, भवतेऽपि, क्षम्यताम्, वाष्पेन्धनम्, दूरभाषक्रमाङ्कः, प्रतिदशवर्षम्

२. **कक्षायां पाठादौ प्रदत्तस्य गीतस्य वैयक्तिकं सामूहिकं च गानं लयसंयोजनपूर्वकं श्रावयत**

३. **अधस्तनस्य अनुच्छेदस्य श्रुतिलेखनं विधाय प्रमुखविषयान् कक्षायां श्रावयत**

मानवरहितस्य विश्वस्य कल्पनापि असम्भवा अस्ति । मानव एव पृथिव्याः संसाधनानाम् उत्पादनम्, प्रशोधनम्, उपयोगं च करोति । समाजस्य, अर्थव्यवस्थायाश्च विकासाय मानवैः प्रकृतिप्रदत्तानां संसाधनानामुपयोगः क्रियते । सामाजिकस्य, सांस्कृतिकस्य च वातावरणस्य निर्माणमपि मानवा एव कुर्वन्ति । समाजस्य सर्वतो विकासे मानवस्य योगदानमपरिहार्यं भवति । संसाधानानां सर्वोत्तमाय सदुपयोगाय यथायथं सुयोग्या जनशक्तिरावश्यकी भवति । एतादृशीनां जनशक्तीनामवस्थाया उपलब्धतायाश्च ज्ञानं जनसङ्ख्यायाः सर्वाङ्गीणेनाध्ययनेनैव सम्भवति । अतः प्रत्येकं देशे प्रतिदशवर्षं जनगणना भवति । कस्मिँश्चिद् निश्चिते समयान्तराले निश्चितभूभागस्य जनसङ्ख्याया आधिकारिकी गणना जनगणना निगद्यते । जनसङ्ख्या च निश्चितभूभागे निश्चितावधौ निवसतां जनानां सङ्ख्या वर्तते । जनगणनायां न केवलं जनानां सङ्ख्याया अपि तु तेषां लिङ्ग-जाति-धर्म-भाषा-शिक्षा-वृत्यादीनां प्रमुखविवरणानां च सङ्कलनं विधीयते । एकस्मिन् देशे, तस्य जनपद-नगर-ग्रामेषु च कुत्र कति स्त्रियः, पुरुषाः, अन्यलिङ्गिनश्च निवसन्ति ? तेषु कति बालकाः ? कति वयस्काः ? कति च वृद्धाः ? आश्रिता जनसङ्ख्या कति ? कति च उत्पादिका ? प्रतिवर्षं कति जना म्रियमाणाः, कति च जायमानाः सन्ति ?

शिक्षितानामशिक्षितानाम्, साक्षराणां निरक्षराणाञ्च सङ्ख्या का ? के जनाः कुत्र निवसन्ति ? ते कानि कार्याणि कुर्वन्ति ? तेषामाधारभूतानां सुविधानामुपलब्धतायाः का स्थितिः ? एतादृशानां प्रश्नानां निवारणाय सर्वेषु देशेषु सर्वकारैरावधिकी जनगणना क्रियते । यथावश्यकं सर्वेक्षणान्यपि भवन्ति । अस्माकं देशे २०७८ तमे विक्रमवर्षे विहिता जनगणना सद्यस्का विद्यते ।

मानवरहित विश्वको कल्पना मात्र पनि गर्न सकिँदैन । मानवले नै पृथिवीमा उपलब्ध स्रोत-साधनको उत्पादन, प्रशोधन र उपयोग गर्दछ । समाज र अर्थव्यवस्थाको विकासका लागि मानवद्वारा प्राकृतिक संसाधनको उपयोग गरिन्छ । सामाजिक र सांस्कृतिक वातावरणको निर्माण पनि मानवले नै गर्छन् । समाजको चौतर्फी विकासमा मानवको योगदान अपरिहार्य छ । संसाधनहरूको उच्चतम सदुपयोगका लागि विभिन्न क्षेत्रमा योग्य जनशक्तिको आवश्यकता पर्दछ । यस्तो जनशक्तिको अवस्था र उपलब्धताको ज्ञान जनसङ्ख्याको सर्वाङ्गीण अध्ययनबाट मात्र सम्भव हुन्छ । त्यसैले हरेक दश वर्षमा जनगणना हुन्छ । कुनै निश्चित समयको अन्तरालमा कुनै निश्चित भूभागको जनसङ्ख्याको आधिकारिक गणनालाई जनगणना भनिन्छ । जनगणनामा मानिसको सङ्ख्या मात्र नभएर उनीहरूको लिङ्ग, जाति, धर्म, भाषा, शिक्षा, पेसा आदि प्रमुख विवरणहरूको सङ्कलन गरिन्छ । एउटा देशमा र त्यहाँका जिल्ला, नगर तथा गाउँमा कहाँ कति महिला, पुरुष र अन्य लिङ्गीको बसोबास छ ? उनीहरूमध्ये कति बालक, कति वयस्क र कति वृद्ध छन् ? आश्रित र उत्पादनशील जनसङ्ख्या कति छ ? प्रत्येक वर्ष कति मरिरहेका छन् र कति जन्मिरहेका छन् ? शिक्षित, अशिक्षित, निरक्षर र साक्षरको सङ्ख्या कति छ ? को-को कहाँ-कहाँ बस्छन् ? उनीहरू के के काम गर्छन् ? उनीहरूलाई आधारभूत सुविधाहरूको उपलब्धताको अवस्था के छ ? यस्ता प्रश्नहरूको समाधानका लागि सबै देशमा त्यहाँका सरकारहरूद्वारा आवधिक जनगणना गरिन्छ । आवश्यकताअनुसार सर्वेक्षणहरू पनि हुन्छन् । हाम्रो देशमा विक्रम संवत् २०७८ मा भएको जनगणना पछिल्लो जनगणना हो ।

**४. कक्षायां स्वपरिवारस्य च परिचयं प्रथमं मातृभाषया तदनु संस्कृतेन दत्त ।**

**५. प्रदत्तैः प्रश्नैः केषाञ्चन त्रयाणां सहपाठिनां नैजविवरणं पृच्छत**

(क) भवतः/भवत्याः/तव नाम किम् ?

(ख) तव स्थायिनिवाससङ्केतः कः ? सम्प्रति च कुत्र निवससि ?

(ग) भवतो जन्मतिथिः कः ? वयश्च कतिवर्षाणि ?

(घ) त्वदीये परिवारे कति सदस्याः सन्ति ? के च ते ?

(ङ) तव मातृभाषा पूर्वजानां भाषा च का ?

(च) स्वकीयस्य परिवारस्य प्रमुखा वृत्तिः का ?

**६. पाठाधारेण श्रेष्ठपरिवारस्य प्रत्येकं जनानां नामानि तेषां वयांसि च कथयत ।**

७. **वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्', असत्यवाक्ये च 'न' इति वदत**

(क) श्रवणलालस्य द्वौ पुत्रौ स्तः ।

(ख) श्रवणलालस्य पूर्वजाः संस्कृतभाषया वदन्ति स्म ।

(ग) जनगणना सर्वकारस्य पर्यटनविभागेन सञ्चाल्यते ।

(घ) जनगणनायां केवलं जनानां सङ्ख्याया गणना भवति ।

(ङ) श्रेष्ठपरिवारे प्रायेण निवासं कुर्वन्तो जनाः पञ्च सन्ति ।

८. **पाठं श्रुत्वा एकपदेन प्रश्नानामुत्तरं वदत**

(क) जनगणनायां जनानां विवरणानां सङ्कलकः केन नाम्ना व्यवह्रियते ?

(ख) श्रवणलालस्य प्रमुखो व्यवसायः कः ?

(ग) जनगणनायाः प्रयोजनाय श्रेष्ठपरिवारस्य प्रमुखो जनः कः ?

(घ) श्रेष्ठपरिवारस्य रात्रौ प्रकाशस्य प्रमुखं स्रोतः किम् ?

(ङ) श्रेष्ठपरिवारे अनुपस्थितसदस्याः कति ?

९. **पाठाधारेण परस्परं मेलयित्वा वाक्यानि कथयत**

| | |
|---|---|
| श्रवणलालः | परिवारप्रमुखोऽस्ति । |
| श्रवणलालस्य पुत्री | श्रवणलालस्य माता वर्तते । |
| माया | श्रवणलालस्य पितास्ति । |
| रमिला | श्रवणलालस्य पत्नी । |
| महानन्दः | श्रवणलालस्य पुत्रः । |
| सुदीपः | स्वदेशेऽनुपस्थितः । |
| श्रवणलालस्य अनुजः | विदेशेऽनुपस्थिता । |

१०. **प्रदत्तं सङ्केतम् आधृत्य स्वपरिचयं वदत**

पूर्णनाम, लिङ्गम्, वयः, जन्मतिथिः, जातिः, धर्मः, मातृभाषा, मातापितरौ, निवासस्थानम्, शिक्षा, विद्यालयनाम, विद्यालयस्य पत्राचारसङ्केतः

११. **श्रवणपाठं श्रुत्वा अधस्तनप्रश्नान् उत्तरयत**

(क) कृषिः कीदृशी क्रिया वर्तते ?

(ख) आदिमकाले जनाः कथं भोजनं प्राप्नुवन्ति स्म ?

(ग) कानि कर्माणि कृषौ समायान्ति ?

(घ) कृषिकार्ये अत्यावश्यकवस्तूनि कानि ?

(ङ) जीवनस्याधारः कः ?

## पठनम्

१. **पाठस्थस्य गीतस्य मौनपठनं विधाय रिक्तस्थाने समुचितं क्रियापदं योजयत**

(क) जनगणनायां समेषां जनानां पञ्जीकरणम् .................. ।

(ख) जनगणनाया महाभियानं प्रतिदशवर्षं सकृत् .................. ।

(ग) जनगणनायाम् एकोऽपि जनो मा .................. ।

(घ) जनगणनायां कश्चिदपि जनो न .................. ।

२. **द्वयोर्द्वयोर्मित्रयोः समूहान् निर्माय प्रतिसमूहं क्रमेण पाठस्य संवादं साभिनयं पठत ।**

३. **पाठं पठित्वा सन्धियुक्तपदानि रेखाङ्कितानि कुरुत ।**

४. **अधस्तनमनुच्छेदं निरवच्छिन्नं पठित्वा कोष्ठस्थशब्दैः रिक्तस्थानं पूरयत**

अस्माकं नेपालदेशः कृषिप्रधानो वर्तते । बहुसङ्ख्यकानां नैपालकजनानां जीविकाया राष्ट्रियस्य अर्थतन्त्रस्य चाधारः कृषिरेवास्ति । खनिजसंसाधनानाम् अन्वेषणोत्खननेऽस्माकं गतिः शिथिला वर्तते । अतोऽत्र वर्तमाने खानिजजन्यानामुद्योगानां विकासो दुष्करो भवति । सत्यामीदृश्यां स्थितौ स्वराष्ट्रमात्मनिर्भरं विधातुं कृषेस्तज्जन्यानामुद्योगानां च विकासोऽपेक्ष्यते । साम्प्रतं जगति विविधप्रकारेण कृषिः क्रियते । वस्तुतः कृषिर्द्विविधा भवति- निर्वाहकृषिः, वाणिज्यकृषिश्च । कृषकपरिवारस्य आवश्यकतापूर्तये एव क्रियमाणा कृषिः निर्वाहकृषिरुच्यते । निर्वाहकृषौ निम्नस्तरीयस्य प्रौद्योगिक्याः, पारिवारिकश्रमस्य चोपयोगो भवति । आपणेषु विक्रयणाय विस्तृतभूमौ विधीयमानानि सस्योत्पादन-पशुपालनादीनि कर्माणि वाणिज्यकृषौ समायान्ति । अस्यां कृषौ अधिकतमानि कार्याणि आधुनिकैर्यन्त्रोपकरणैर्भवन्ति । अस्यामधिकस्य धनस्य निवेशोऽपि आवश्यको भवति । राष्ट्रस्यावश्यकतानां परिपूर्तये, अर्थतन्त्रस्य सुदृढीकरणाय च वाणिज्यकृषेः प्रवर्धनमावश्यकमस्ति ।

(क) नेपालः ...................... देशो विद्यते । (कृषिप्रधानः, उद्योगप्रधानः)

(ख) कृषकपरिवारस्य आवश्यकतापूर्तये ...................... क्रियते । (निर्वाहकृषिः, वाणिज्यकृषिः)

(ग) नेपाले ...................... उद्योगानां विकासः सुकरो भवति । (खनिजजन्यानाम्, कृषिजन्यानाम्)

(घ) ...................... अधिकस्य धनस्य निवेशो भवति । (निर्वाहकृषौ, वाणिज्यकृषौ)

(ङ) नैपालकानां जनानां जीविकायाः प्रमुखाधारः ...................... विद्यते । (कृषिः, सेवा)

हाम्रो देश नेपाल कृषिप्रधान देश हो । बहुसङ्ख्यक नेपालीको जीविका र राष्ट्रिय अर्थतन्त्रको पनि आधार कृषि नै हो । खनिज सम्पदाको अन्वेषण र उत्खननमा हाम्रो गति सुस्त छ । त्यसैले यहाँ वर्तमान समयमा खनिजजन्य उद्योगहरूको विकास गर्न असहज छ । यस्तो अवस्थामा आफ्नो देशलाई आत्मनिर्भर बनाउन कृषि र कृषिजन्य उद्योगहरूको विकास गर्नु आवश्यक छ । अहिले संसारमा विविध प्रकारले कृषि गरिन्छ । खासमा कृषि दुई प्रकारको हुन्छ- निर्वाहमुखी कृषि र व्यावसायिक कृषि । कृषक परिवारको आवश्यकता पूरा गर्न मात्र गरिने कृषिलाई निर्वाहमुखी कृषि भनिन्छ । यसमा निम्नस्तरका प्रविधि र पारिवारिक श्रमको प्रयोग हुन्छ । बजारमा बिक्रीका लागि विस्तृत भूमिमा गरिने अनाज, फलफूल आदिको उत्पादन, पशुपालन जस्ता कामहरू व्यावसायिक (वाणिज्य) कृषिअन्तर्गत पर्दछन् । व्यावसायिक कृषिमा धेरैजसो काम आधुनिक यन्त्र तथा उपकरणद्वारा हुन्छ । यसमा धेरै धनको लगानी आवश्यक हुन्छ । राष्ट्रका आवश्यकताहरूको परिपूर्ति गर्न र अर्थतन्त्रलाई सुदृढ बनाउन व्यावसायिक कृषिको प्रवर्धन गर्नु आवश्यक छ ।

**५. पाठस्य मौनपठनं विधाय अज्ञातार्थानि पदानि रेखया परिवेष्टयत ।**

**६. प्रदत्तं विवरणं पठित्वा दश प्रश्नान् निर्मात**

मम नाम सरला विश्वकर्मा अस्ति । मम स्थायिनिवासः मुगुजनपदस्य खत्याड-ग्रामपालिकायां वर्तते। मुगुजनपदं कर्णालीप्रदेशे आपतति। तत्रास्माकं मृत्काष्ठशिलाभिर्निर्मितं सामान्यं गृहं विद्यते। सम्प्रति अहं नेपालगन्जनगरे अग्रजेन सह निवसामि। अत्रावां परगृहे भाटयित्वा वसावः। भाटकञ्च गृहस्वामिने प्रतिमासं दातव्यं भवति । अहं चतुर्विंशतिवर्षीया अस्मि । अहमविवाहिता महिलास्मि, अग्रजश्चाविवाहित एव । अहं नेपालसंस्कृतविश्वविद्यालयतः संस्कृतसाहित्यविषयमवलम्ब्य आचार्यपरीक्षाम् उत्तीर्णवती अस्मि । इदानीमहं अत्रत्ये नैजविद्यालये माध्यमिकस्तरीयान् छात्रान् पाठयामि । ममाध्यापनस्य विषयः संस्कृतभाषाऽस्ति । मम जन्मवासरः सोमवासरोऽस्ति । मम जन्मदिवसो वैशाखमासस्य चतुर्दशदिनाङ्को वर्तते । जन्मवर्षञ्च वैक्रमाब्दस्य चतुःपञ्चाषदुत्तरद्विसहस्रतमं विद्यते। त्रिंशद्वर्षीयोऽग्रजः अत्रैव एकस्यां अतिथिगृहे कार्यं करोति । मम मातापितरौ स्वग्रामे एव निवसतः । तौ तत्र कृषिकर्मणि संलग्नौ स्तः । मम एका अनुजा च अस्ति । अष्टादशवर्षीया सा सम्प्रति काष्ठमण्डपे मातुलगृहे निवसति । सा त्रिभुवनविश्वविद्यालये चिकित्साशास्त्रं पठन्ती अस्ति । द्वौ पुरुषौ, तिस्रो महिलाश्चेति कृत्वा पञ्चजनात्मको मम परिवारः । वयं सर्वे स्वकीयेषु कर्मसु रताः सन्तः सुखिनः स्मः ।

मेरो नाम सरला विश्वकर्मा हो । मेरो स्थायी निवास मुगु जिल्लाको खत्याड गाउँपालिकामा छ । मुगु जिल्ला कर्णाली प्रदेशमा पर्दछ । त्यहाँ हाम्रो माटो, काठ र ढुङ्गाले बनेको सामान्य घर छ । अहिले म नेपालगन्ज सहरमा दाइसित बस्छु । यहाँ हामी अरूको घरमा भाडा तिरेर बस्छौँ । घर मालिकलाई हरेक महिना भाडा तिर्नुपर्छ । मेरो उमेर चौबिस वर्ष भयो । म अविवाहित महिला हुँ र दाजु पनि अविवाहित नै हुनुहुन्छ । मैले नेपाल संस्कृत विश्वविद्यालयबाट संस्कृत साहित्य विषयमा आचार्य उत्तीर्ण गरेको छु । म अहिले यहीँ रहेको निजी विद्यालयमा माध्यमिक तहका छात्रहरूलाई पढाउँछु । मैले पढाउने विषय संस्कृत भाषा हो । मेरो जन्मबार सोमबार हो । मेरो जन्मदिन वैशाख महिनाको १४ गते हो । जन्मवर्ष विक्रम संवत् २०५४ हो । तिस वर्षीय मेरा दाजु यहीँको एक होटेलमा काम गर्नुहुन्छ । मेरा आमाबुबा आफ्नै गाउँमा बस्नुहुन्छ । उहाँहरू कृषिकर्ममा संलग्न हुनुहुन्छ । मेरी एउटी बहिनी पनि छिन् । अठार वर्षकी उनी अहिले काठमाडौँमा मामाघरमा बस्छिन् । उनी अहिले त्रिभुवन विश्वविद्यालयमा चिकित्साशास्त्र पढ्दै छिन् । दुई पुरुष र तीन महिला गरी मेरो परिवारमा पाँच सदस्य छौँ । आ-आफ्नो काममा तल्लीन रहेका हामी सबै सुखी छौँ ।

## ७. पाठस्थानि प्रश्नात्मकानि वाक्यानि उच्चैः स्वरेण पठत ।

## ८. पाठं पठित्वा प्रश्नान् उत्तरयत

(क) जनगणकस्य नाम किम् ?

(ख) गृहस्वामी कः ? स एव परिवारप्रमुखो वा ?

(ग) श्रेष्ठपरिवारे आहत्य कति जनाः सन्ति ?

(घ) श्रवणलालस्य पुत्री सम्प्रति कुत्र निवसति ?

(ङ) जनगणनायां सङ्कलनीयानि कानिचन त्रीणि विवरणानि निर्दिशत ।

## ९. अधस्तनं संवादं पठित्वा यथानिर्देशं कुरुत

(अद्य कक्षायां शिक्षिका छात्राणां मध्ये स्वकीयस्य परिवारस्य प्रमुखकर्मणां विषये विमर्शनं कारयन्ती अस्ति । सर्वे छात्राः स्वकीयस्य परिवारस्य व्यवसायस्य परिचयं ददति ।)

शिक्षिका - सरिते ! भवत्याः पिता किं करोति ? स्वकीयस्य परिवारस्य व्यवसायविषये विस्तरेण वदतु ।

सरिता - मम पिता कृषकः अस्ति । स कृषिकर्म करोति । माता अपि कृषिकर्मणि पितुः साहाय्यं विदधाति । अवकाशसमये अहमपि मातृपित्रोः सहायतां करोमि । हलेन ट्र्याक्टरयन्त्रेण वा क्षेत्रस्य कर्षणं भवति । अधुना आधुनिकानां यन्त्रोपकरणानां प्रयोगेण कृषिकर्म सुकरं जातमस्ति । वयम् अन्नानाम्, फलानाम्, शाकानां च उत्पादनं कुर्मः । परिवारस्य कृते आवश्यकानि सर्वाण्यपि कृषिवस्तूनि वयं स्वयमेव

उत्पादयामः। परिवारस्य आवश्यकतां सन्तुष्य यत् किमपि शेषं भवति तद् आपणौ विक्रीणीमः। पशुपालनम् अस्माकं सहायकव्यवसायो विद्यते।

शिक्षिका - बहु समीचीनम्। कृषको भूमिपुत्रोऽस्ति। स एव बुभुक्षितानां जनानां क्षुधाया उपचारं करोति।

आदित्यः - मम पिता चिकित्सकः अस्ति। स रोगिणां रोगस्य चिकित्सां करोति। गृहस्य समीपे एव सामुदायिकचिकित्सालयो वर्तते। स तत्रैव रोगिभ्यः चिकित्सकीयां सेवां यच्छति। मम माता वित्तकोषे कार्यं करोति। मुद्राणां विनिमयः तस्याः प्रमुखं कार्यमस्ति। जना वित्तकोषे स्वार्जितस्य धनस्य निक्षेपं कुर्वन्ति। आवश्यके सति ते सञ्चितं धनं वैद्युतमाध्यमेन वाहकादेशादिमाध्यमेन च प्रत्याहरन्ति। जना वित्तकोषतः ऋणं गृहीत्वा व्यवसायं कुर्वन्ति।

शिक्षिका - साधु आदित्य ! इदानीं यशस्विनी स्वपरिवारस्य उद्योगविषये कथयतु।

यशस्विनी - मम माता शिक्षिका अस्ति। सा माध्यमिकविद्यालये पाठयति। पिता च आपणिको वर्तते। स गृहे एव वस्त्राणाम् आपणं सञ्चालयति। वस्त्राणां क्रयणं विक्रयणं च तस्य दैनन्दिनकार्यमस्ति।

शिक्षिका - समीचीनम्। सर्वे स्वपरिवारस्य प्रमुखाया वृत्तेः परिचयं ददतु। अपरः कः वदति ?

समीक्षा - अहं वदामि शिक्षिके ! मम परिवारस्य प्रमुखा वृत्तिः पशुपालनं वर्तते। दुग्धस्य कृते गवां पालनं विहितमस्ति। मम पिता गोपोऽस्ति। स दुग्धं विक्रीय धनमर्जति। स अजानां च व्यावसायिकं पालनं विदधाति। माता अपि अस्मिन्नेव कार्ये संलग्ना अस्ति।

रविः - मम पिता प्राध्यापकः अस्ति। स महाविद्यालये कृषिविषयं पाठयति। स विश्वविद्यालयस्य विविधेषु अनुसन्धानकार्येषु अपि संलग्नो भवति। प्रयोगात्मकशिक्षणक्रमे स देशस्य विविधेषु क्षेत्रेषु छात्राणां स्थालगतं भ्रमणं कारयति। मम माता उपचारिका अस्ति। सा चिकित्सालये रोगिणां सेवां करोति।

भानुः - मम परिवारस्य प्रधाना वृत्तिः गानमस्ति। मम पिता गायकः अस्ति। स लोकगानं गायति। गीतस्य कृते शब्दसङ्कलनं सङ्गीतसंयोजनं च स प्रायः स्वयमेव करोति। माता अपि गायिका अस्ति। तस्याः आधुनिकगाने रुचिः वर्तते। भ्राता सङ्गीतकारः अस्ति। स आधुनिकगीतेषु शास्त्रीयगीतेषु च सङ्गीतसंयोजनं करोति।

हिमानी - मम पिता अभियन्ता अस्ति। स भवनस्य, मार्गस्य, सेतोश्च निर्माणाय योजनां मानचित्रं च निर्माति। स निर्माणकार्याणां निर्देशनम्, निरीक्षणम्, परीक्षणं च करोति। माता गृहिणी अस्ति। अग्रजा सङ्गणकाभियन्त्री वर्तते। सा सङ्गणकस्य कृते तन्त्रांशस्य प्रक्रमस्य च निर्माणं करोति।

दोर्जे - मम पिता उद्योगव्यवसायी अस्ति। औद्योगिकवस्तूनामुत्पादनम् अस्माकं परिवारस्य

प्रमुखं कर्म विद्यते । पिता कृषिजन्यम् उद्योगं सञ्चालयति । माता उद्योगतः उत्पादितानां वस्तूनां विक्रयणे पितुः साहाय्यं करोति । भ्राता पर्यटनव्यवसायी वर्तते । स पर्यटकेभ्यः वैतनिकीं सेवां ददाति ।

शिक्षिका - सर्वेभ्यो धन्यवादाः सन्तु । युष्माभिः सर्वैः स्वपरिवारस्य आर्थिकक्रियाकलापस्य सम्यक् परिचयो दत्तः । अस्माभिः स्वकीयस्य परिवारस्य समाजस्य च सर्वविधानामावश्यकतानां पूर्तये सदैव उद्यमशीलैः भाव्यम् ।

**(अ) अधस्तनप्रश्नानामुत्तरं पूर्णवाक्येन लिखत**

(क) शिक्षकः किं करोति ?

(ख) चिकित्सकस्य व्यावसायिकं कर्म किम् ?

(ग) को मानचित्रं रचयति ?

(घ) को भूमिपुत्रः कथ्यते ?

(ङ) बुभुक्षायाः शमनं कस्य कर्मणा भवति ?

**(आ) कस्य किं कर्म ? परस्परं मेलयित्वा अभ्यासपुस्तिकायां लिखत**

| | |
|---|---|
| गायकः | रोगिणां (रोगस्य) चिकित्सा |
| उद्योगव्यवसायी | छात्राणां शिक्षणम् |
| चिकित्सकः | निर्माणकार्याणां परीक्षणम् |
| आपणिकः | गायनम् |
| सङ्गीतकारः | औद्योगिकवस्तूनाम् उत्पादनम् |
| अभियन्ता | गीतेषु सङ्गीतसंयोजनम् |
| शिक्षिका | आपणे वस्तूनां विक्रेता |

**(इ) सखिभिः सह विमृश्य कोष्ठस्थशब्दैः रिक्तस्थानं पूरयत**

पशुपालकः, क्रीडकस्य, अध्यापकः, यानचालकः, उपचारिका, लेखकः, कर्मचारी

(क) ................. अध्यापनं करोति ।

(ख) सर्वकारीयः ................. राष्ट्रसेवकोऽपि कथ्यते ।

(ग) ................. पशूनां पालनं करोति ।

(घ) ................. चिकित्सकस्य निर्देशनानुसारेण रोगिणां सेवां करोति ।

(ङ) यो यानं चालयति सः ................. उच्यते ।

(च) ................. लेखनेन जीविकां करोति ।

(छ) क्रीडनम् ................. वृत्तिः वर्तते ।

(ई) **संवादस्य मौनपठनं विधाय व्यावसायिकशब्दान् रेखाङ्कितान् कुरुत ।**

(उ) **शिक्षकस्य साहा¨¨येन अधस्तनपदानि स्त्रीलिङ्गे परिवर्त्य वाक्येषु योजयत**

यथा- अभियन्ता अभियन्त्री

अभियन्त्री भवनस्य मानचित्रं रचयति ।

| | | | |
|---|---|---|---|
| शिक्षकः | ................. | लेखकः | ................. |
| गोपः | ................. | व्यवसायी | ................. |
| उद्यमी | ................. | प्राध्यापकः | ................. |
| कर्मचारी | ................. | आपणिकः | ................. |
| नर्तकः | ................. | नायकः | ................. |

(ऊ) **पदानि प्रयुज्य स्वकीयानि वाक्यानि रचयत**

पाठनम्, गानम्, अनुसन्धानम्, नृत्यम्, कथावाचनम्, अभिनयः, स्वच्छीकरणम्

(ऋ) **संवादेऽनागतान् पञ्च व्यावसायिकशब्दान् अन्विष्य वाक्येषु प्रयोगं दर्शयत ।**

## लेखनम्

१. **पाठस्थगीतस्य पदच्छेदसहितमनुलेखनं कुरुत ।**

२. **पुस्तकमवलम्ब्य कोशादीनां साहाय्येन वा शब्दानामर्थं लिखत**

आहत्य, सम्प्रति, परम्, वयः, नलिका, व्याहरामि, गणकः, इन्धनम्

३. **निम्नाङ्कितासु अवस्थासु सन्धिप्रक्रियया जायमानानि रूपाणि पाठादन्विष्य लिखत**

| | |
|---|---|
| तथा+एव = ..................... | तु+अत्र = ..................... |
| पृथक्+रीत्या = ..................... | मम+अपि = ..................... |
| कस्मिन्+चित् = ..................... | धारिकाभिः+निर्मितम् = ..................... |
| सर्वे+अपि = ..................... | महत्+अभियानम् = ..................... |

४. **शिक्षकस्य यथावश्यकं साहाय्येन सन्धिं विच्छेदयत**

नैषा, नावृत्येत, अयन्तु, तत्रैव, जनोऽपि, नावश्यकम्, चेदहम्

५. **अधस्तनप्रश्नानामुत्तरं लिखत**

(क) तव नाम किमस्ति ?

(ख) त्वं कतमकक्षायां पठसि ?

(ग) तव जन्मतिथिः कः ? वयश्च कति ?

(घ) त्वं कुत्र निवससि ?

(ङ) तव मातापित्रोर्नाम्नी के ?

(च) तव परिवारे कति सदस्याः सन्ति ? के च ते ?

(छ) तव परिवारस्य प्रमुखा वृत्तिः का ?

(ज) तव मातृभाषा द्वितीया भाषा च के ?

(झ) तव स्थायिनिवाससङ्केतः कः ?

(ञ) तव विद्यालयस्य नाम किम् ? तस्य पत्राचारसङ्केतः कः ?

**५. एकेन सम्बन्धसूचकशब्देन रेखाङ्कितौ शब्दौ प्रतिस्थाप्य वाक्यस्य पुनर्लेखनं कुरुत**

(क) केशवस्य मातुः पतिः सर्वकारसेवायामस्ति ।

(ख) मम मातुर्भ्राता मयि अतीव स्निह्यति ।

(ग) सीतायाः पितुः पिता कृषको वर्तते ।

(घ) तव मातुः पिता कतिवर्षीयोऽस्ति ?

(ङ) तस्य पितुः माता पञ्चनवतिवर्षीयापि सक्रिया वर्तते ।

**६. कोष्ठकस्थैः पदैः रिक्तस्थानानि पूरयत**

| श्वश्रूः, मातुली, पौत्री, मातामही, जामाता, दौहित्रः, पितृव्यः, श्वशुरः |
|---|

मातुः माता = ..................        भर्तुः/पत्न्याः माता = ..................

भर्तुः/पत्न्याः पिता = ..................        दुहितुः पतिः = ..................

दुहितुः पुत्रः = ..................        मातुलस्य पत्नी = ..................

पुत्रस्य पुत्री = ..................        पितुः भ्राता = ..................

**७. प्रदत्तानां पदानां वाक्ये प्रयोगं दर्शयत**

पञ्जीकरणम्, परिचयः, लिङ्गम्, वृत्तिः, वयः, जनगणना, पेयजलम्, परिवारः

**८. पूर्णवाक्येन उत्तरं लिखत**

(क) जनगणना कतीनां वर्षाणामन्तराले भवति ?

(ख) नेपालस्य सद्यस्का जनगणना कतमा वर्तते ? सा च गणना कस्मिन् वर्षे विहिता ?

(ग) नेपाले प्रथमा जनगणना कदा जाता ?

(घ) जनगणनाकार्यस्य सञ्चालनं सर्वकारस्य केन विभागेन क्रियते ?

(ङ) जनगणनाकार्यार्थं पाकशालामाधृत्य कस्य निश्चयनं क्रियते ?

(च) जनगणनायां प्राथमिकविवरणानां सङ्कलकः किमुच्यते ?

**९. जनस्य सामान्यपरिचये विस्तृतपरिचये च कानि कानि विवरणानि समाविश्यन्ते ? सारिण्यां दर्शयत ।**

१०. **स्वसमुदाये जनैरवलम्ब्यमानानां कासाञ्चन सप्तानां प्रमुखवृत्तीनां नामानि लिखत ।**

११. **द्वयोरपरिचितजनयोर्मेलनप्रसङ्गमवलम्ब्य परस्परं परिचायनात्मकं संवादं रचयत ।**

१२. **पाठाधारेण जनगणनायां सङ्कल्यमानानि प्रमुखविवरणानि सूचीकुरुत ।**

## व्याकरणानुशीलनम्

१. **अधस्तनमनुच्छेदं पठित्वा निर्दिष्टकार्याणि कुरुत**

अस्माकं परिवार इलामजनपदे निवसति । परिवारे वयं पञ्च सदस्याः स्मः परन्तु सम्प्रति चत्वार एवात्र प्रायेण निवसामः । मम अग्रजा भगिनी विराटनगरे निवसति । सा तत्र आयुर्वेदचिकित्सां पठति । विद्यापीठस्य छात्रावासे तस्या निवासो विद्यते । सा अवकाशसमये गृहमागच्छति । इदानीं तस्याः परीक्षा सञ्चलन्ती वर्तते इति सा मां ह्यो दूरभाषेण अवदत् । मम पिता स्थानीयविद्युद्गृहे कार्यं करोति । तस्मिन् कार्यालये नक्तन्दिवं कार्यं प्रचलति । पिता कदाचिद् दिवा कदाचित्तु रात्रौ कार्यार्थं गच्छति । स अद्य सायं प्रशिक्षणार्थं धराननगरं गमिष्यति । माता चायस्य कृषिं करोति । सा स्वकीये स्वल्पे क्षेत्रे चायस्य व्यावसायिकम् उत्पादनं करोति । व्यावसायिकाः क्रेतारः चायं क्रेतुं क्षेत्रे एव प्राप्नुवन्ति । अहं स्थानीयविद्यालये नवम्यां कक्षायां पठन् अस्मि । अवकाशदिनेषु अहं मातुः कार्ये सहयोगं विदधामि । पितामही अस्माकं मार्गदर्शनं करोति । सा वयसा वृद्धा क्रियया च वयस्का वर्तते । सा कदाचित् परिवारस्य कृते भोजनं पचति । तस्या आशीर्वादेन वयं स्वस्थाः सुखिनश्च स्मः ।

(अ) **अनुच्छेदे प्रयुक्तानि प्रथमाविभक्त्यन्तानि कर्तृपदानि रेखाङ्कितानि कुरुत । तदनु तेषां क्रियापदैः सह अभ्यासपुस्तिकायां लिखत ।**

यथा- परिवारः निवसति ।

(आ) **अनुच्छेदस्थानि द्वितीयान्तानि कर्मपदानि रेखया परिवेष्टयत ।**

(इ) **प्रदत्तस्य पदस्य विशेषणपदं विशेष्यपदं वानुच्छेदादन्विष्य रिक्तस्थाने लिखत**

| विशेषणपदानि | विशेष्यपदानि |
|---|---|
| यथा- अग्रजा | भगिनी |
| ………………… | उत्पादनम् |
| स्वस्थाः, ………………… | ………………… |
| व्यावसायिकाः | ………………… |
| …………………, ………………… | सा (पितामही) |
| पठन् | ………………… |

**(ई) सारिणीस्थपदानां संयोजनेन अनुच्छेदानुकूलानि वाक्यानि रचयत**

| कर्तृपदानि | कर्मपदानि | क्रियापदानि |
|---|---|---|
| भगिनी | आयुर्वेदचिकित्साम् | पठति |
| सा | कृषिम् | विदधामि |
| पिता | सहयोगम् | क्रीणन्ति |
| अहम् | भोजनम् | करोति |
| पितामही | विद्युद्गृहे कार्यम् | करोति |
| माता | मार्गदर्शनम् | करोति |
| क्रेतारः | चायम् | अवदत् |
| भगिनी | धराननगरम् | पचति |
| सः | माम् | गमिष्यति |

यथा- सा भोजनं पचति ।

(उ) **अनुच्छेदे प्रयुक्तम् 'निवसति' इति क्रियापदं 'नि' इति उपसर्गपूर्वकस्य वस्-धातोः वर्तमानकालस्य (लट्लकारस्य) प्रथमपुरुषस्य एकवचनस्य क्रियापदं वर्तते । तत्र प्रयुक्तम् 'निवसामः' इति क्रियापदं तस्यैव उत्तमपुरुषस्य बहुवचनम् । आरब्धः परन्तु अपरिसमाप्तः कालः वर्तमानकालो भवति । अनुच्छेदे प्रयुक्तानि अन्यानि वर्तमानकालिकक्रियापदानि अन्विष्य शिक्षकस्य साहाय्येन तेषां धातुनिर्देशं कुरुत ।**

## २. वाक्येषु रेखाङ्कितानां पदानां शब्द-विभक्ति-वचन-कारकाणि निर्दिशत

यथा- पितामहः कथां कथयति ।

नामतः जनस्य चरित्रस्य ज्ञानं न भवति ।

| पदम् | शब्दः | विभक्तिः | वचनम् | कारकम् |
|---|---|---|---|---|
| पितामहः | पितामह | प्रथमा | एकवचनम् | कर्ता |
| कथाम् | कथा | द्वितीया | एकवचनम् | कर्म |
| ज्ञानम् | ज्ञान | प्रथमा | एकवचनम् | कर्ता |

(क) लेखकः लेखं लिखति ।

(ख) गुरुः सर्वान् पाठान् पाठयति ।

(ग) सा गृहकार्यं समाप्य चलचित्रं पश्यति ।

(घ) नायिका सुन्दराणि वस्त्राणि धारयति ।

(ङ) द्वे मित्रे परस्परं संवादम् अकुरुताम् ।

(च) शिक्षिका मां प्रश्नं पृच्छति ।

(छ) त्वं पुस्तकं क्रेतुम् आपणं गच्छ ।

(ज) आवां पठनं समाप्य प्रधानाध्यापकं मिलित्वा निवेदनं करिष्यावः ।

(झ) माघमासे शैत्यं वर्धते ।

(ञ) विश्वासः कपिलवस्तुमण्डले निवसति ।

**३. शब्दरूपावल्या यथावश्यकं साहाय्येन कोष्ठस्थनिर्देशमनुसृत्य रिक्तस्थानं पूरयत**

(क) मम .................. क्रीडां पश्यन्ति । (मित्र- प्रथमाया बहुवचनम्)

(ख) भक्तः .................. नमति । (देव- द्वितीयाया एकवचनम्)

(ग) विद्या .................. ददाति । (विनय- कर्मकारके)

(घ) स्वामिना प्रपन्नाचार्येण .................. अधीताः । (वेद- प्रथमाया बहुवचने)

(ङ) एषा .................. द्वाविंशतितमवर्षे वयसि विवाहं कृतवती । (महिला- कर्तृकारके)

**४. अधस्तनपदानि यथारूपं प्रयुज्य वाक्यानि रचयत**

बालकान्, शिक्षिकाः, मित्रम्, फलानि, मोदकम्, कक्षा, सः, किम्, कः, के, तानि, सा

**५. शब्दरूपावल्याः सहयोगेन तद्-शब्दस्य किम्-शब्दस्य च त्रिषु लिङ्गेषु रूपाणि लिखत ।**

**६. अधस्तनपदानां लिङ्गं परिचित्य समुचितप्रकोष्ठे तेषां लेखनं कुरुत**

तत्, कासाम्, कस्यै, कौ, सः, कानि, किम्, तान्, कम्, तस्याः, कस्याम्, कः, तया, तानि

| पुंलिङ्गपदानि | स्त्रीलिङ्गपदानि | नपुंसकलिङ्गपदानि |
|---|---|---|
| कौ ............. .............<br>............. ............. | कासाम् .............<br>............. .............<br>............. | तत् .............<br>............. ............. |

**७. स्थूलाक्षरकान् शब्दान् तद्-शब्दस्य समुचितरूपेण प्रतिस्थाप्य वाक्यानां पुनर्लेखनं कुरुत ।**

यथा- लता नवमकक्षायाः छात्रा अस्ति । लतायाः गृहं पाटननगरे वर्तते ।

लता नवमकक्षायाः छात्रा अस्ति । तस्याः गृहं पाटननगरे वर्तते ।

(क) सीता रामस्य पत्नी अस्ति । सीतायाः पितुर्नाम जनकोऽस्ति ।

(ख) बालाः इतस्ततः भ्रमन्ति । बालानां स्वभावः चञ्चलो भवति ।

(ग) कविः कवितां लिखति । कविः कवितां वाचयित्वा श्रावयति ।

(घ) माता पुत्रमुच्चैः आह्वयति । माता पुत्राय मिष्टं यच्छति ।

(ङ) उद्याने पुष्पाणि विकसितानि सन्ति । अहं पूजायै पुष्पाणि चिनोमि ।

८. **सङ्केतितं पदं किम्-शब्देन विस्थाप्य यथोदाहरणं प्रश्ननिर्माणं कुरुत**

यथा- विज्ञानं विशिष्टज्ञानं वर्तते । - किं विशिष्टज्ञानं वर्तते ?

मातापितरौ स्तुत्यौ भवतः । - कौ स्तुत्यौ भवतः ?

क्रीडकाः कन्दुकेन क्रीडन्ति । - क्रीडकाः केन क्रीडन्ति ?

मातुली यानमारुह्य आगतवती । - मातुली कथम् आगतवती ?

पिता ताडितवान् इति कारणेन बालः रोदिति । - बालः किमर्थं रोदिति ?

सा अतीव सुन्दरी अस्ति । - सा कीदृशी अस्ति ?

हरितं प्राकृतिकं दृश्यं जनानां मनो हरति । - कीदृशं दृश्यं जनानां मनो हरति ?

कृषकाः भूमौ उपविशन्ति । - कृषकाः कुत्र उपविशन्ति ?

रमेशः उपेन्द्रस्य प्रथमः पुत्रोऽस्ति । - रमेशः उपेन्द्रस्य कतमः पुत्रोऽस्ति ?

तस्याः परिवारे चतस्रः महिलाः सन्ति । - तस्याः परिवारे कति महिलाः सन्ति ?

स भारतदेशाद् आगतवान् अस्ति । - स कुतः आगतवान् अस्ति ?

(क) कर्मकराः गृहं कुर्वन्ति ।

(ख) श्रवणलालः पशुपालनं करोति ।

(ग) पितृव्यः स्नानार्थं नदीं गच्छति ।

(घ) तस्य दौहित्रः ग्रामाद् दूरं गतवान् अस्ति ।

(ङ) नेपाली मम द्वितीया भाषा ।

(च) अस्माकं देशः कलाभिः समृद्धो वर्तते ?

(छ) नेपालः सुन्दरः शान्तश्च विद्यते ।

## ९. धातुरूपावलिं तन्निर्मितवाक्यानि च पठित्वा अधस्तनकार्यकलापान् कुरुत

वस्-धातुः (निवासार्थकः)

वर्तमानकाले (लटि) रूपाणि-

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| वसति | वसतः | वसन्ति | - प्रथमः पुरुषः |
| वससि | वसथः | वसथ | - मध्यमः पुरुषः |
| वसामि | वसावः | वसामः | - उत्तमः पुरुषः |

स वसति ।    तौ वसतः    ते वसन्ति ।

सा वसति ।    ते वसतः    ताः वसन्ति ।

तत् वसति ।    ते वसतः    तानि वसन्ति ।

(एकः) छात्रः वसति ।    (द्वौ) छात्रौ वसतः ।    (बहवः) छात्राः वसन्ति ।

(एका) महिला वसति ।    (द्वे) महिले वसतः ।    (बहवः) महिलाः वसन्ति ।

(एकम्) मित्रं वसति ।    (द्वे) मित्रे वसतः । (बहूनि) मित्राणि वसन्ति ।

भवान्/भवती वसति ।    भवन्तौ/भवत्यौ वसतः । भवन्तः/भवत्यः वसन्ति ।

त्वं वससि ।    युवां वसथः ।    यूयं वसथ । (केवलम् युष्मद्-शब्दस्य कृते)

अहं वसामि ।    आवां वसावः ।    वयं वसामः । (केवलम् अस्मद्-शब्दस्य कृते)

(क) पठ्, गम् (गच्छ्), भू (भव्), पच्, उपविश्, स्था (तिष्ठ्), लिख्, वद्, क्रीड् इति धातूनां वर्तमानकाले रूपाणि विलिख्य प्रतिपदं वाक्येषु योजयत ।

(ख) धातुरूपावल्याः साहाय्येन अस्, कृ (परस्मैपदे), श्रु, दा, धा, वृत्, ज्ञा, इति एतेषां धातूनां रूपावलिं लिखित्वा प्रतिपदं वाक्ये प्रयोगं दर्शयत ।

(ग) अधस्तनक्रियापदानि बहुवचने परिवर्तयत

निवसति, अस्ति, करोषि, अस्मि, शृणोमि, भवति, वर्तते

## १०. कोष्ठस्थनिर्देशमनुसृत्य वाक्यानि परिवर्तयत

(क) अजः वने चरति । (बहुवचने)

(ख) अश्वाः शीघ्रं धावन्ति । (एकवचने)

(ग) वानराः फलं खादन्ति । (द्विवचने)

(घ) ते उच्चैः हसन्ति । (उत्तमपुरुषे)

(ङ) युवां कुत्र गच्छथः ? (प्रथमपुरुषे)

(च) स जनगणनं करोति । (मध्यमपुरुषे)

## रचनात्मकः अभ्यासः

१. **प्रदत्तायां पञ्जीकरणपुस्तिकायां स्वकीयं विवरणं पूरयत**

पञ्जीकरणपुस्तिका

आवेदकस्य पूर्णं नाम- ................................ लिङ्गम्- ..................

वयः .................. धर्मः- .................. जातिः- ..................

जन्मतिथिः (विक्रमवर्षे)-

अङ्केषु- ............/........../.........

अक्षरेषु ....................................................................................................

जन्मस्थानम्- ..................वृत्तिः- .................. राष्ट्रियता- ..................

वैवाहिकी स्थितिः-.................. दूरभाषप्रक्रमाङ्काः-..............................

मातृनाम- .................................... पितृनाम- ....................................

पितामहस्य नाम- ................................ पितामह्या नाम- ...............................

भ्रातृ-भगिनीनामानि (अधिकतमेन चतुर्णाम्)-

१. .................................... २. ....................................

३. .................................... ४. ....................................

पारिवारिकसदस्यानां सङ्ख्या- ........................

स्थायिनिवाससङ्केतः-

प्रदेशनाम- ................................. जनपदनाम- ........................

ग्राम/नगरपालिकानाम- ................................... पुरार्द्धविस्तरसङ्ख्या- .............

ग्रामनाम- ................................

अस्थायिनिवाससङ्केतः-

प्रदेशनाम- ................................. जनपदनाम- ........................

ग्राम/नगरपालिकानाम- ................................... पुरार्द्धविस्तरसङ्ख्या- .............

ग्रामनाम- ................................

भाषा-

मातृभाषा- .................... द्वितीया भाषा- .................... अन्या भाषा- ...................

शिक्षा-

उत्तीर्णा कक्षा- .................... अध्ययनरता कक्षा- ....................

शिक्षणसंस्थाया नाम पत्राचारसङ्केतश्च- ............................................................

भविष्यति अध्ययनाय रुच्यमाणो विषयः- ....................

२. **अन्तर्जालमाध्यमेन तथ्याङ्कविभागस्य जालदेशं परिभ्रम्य सद्यस्कायां जनगणनायां प्रयुक्तां मुख्यप्रश्नावलिम् अन्विषत। सहपाठिनां शिक्षकस्य च मध्ये विमर्शं कृत्वा तत्र पृष्टानां प्रमुखप्रश्नानां संस्कृतभाषायामनुवादं कुरुत। तान् प्रश्नान् गणनापुस्तिकावत् संयोज्य आत्मानं च गणकं मत्वा कस्यचिदेकस्य मित्रस्य विवरणं प्रपूरयत।**

## श्रवणपाठः

कृषिः प्राथमिकी क्रिया वर्तते। येषां कार्याणां सम्बन्धः प्राकृतिकसंसाधनानाम् उत्पादनेन निष्कर्षणेन च सह भवति तानि कार्याणि प्राथमिकक्रियायाम् अन्तर्भवन्ति। सस्यानि, फलानि, पुष्पाणि, पशुपालनम्, मत्स्यपालनम् इत्यादयो विषयाः कृषिकार्येण सह सम्बद्धाः सन्ति। विश्वस्य अधिकतरा जनाः प्रत्यक्षपरोक्षरूपेण कृषिकार्येषु संलग्नाः सन्ति। आदिमकाले मानवाः वन्यपशून् मृगयन्ति स्म। तदानीं तदेव तेषां भोजनम् आसीत्। कालान्तरे कन्दमूलानि, फलानि, स्वतः जायमानानि अन्नानि च खादन्ति स्म। तदनन्तरं मानवैः कृष्या अन्नोत्पादनं प्रारब्धम्। कालान्तरे ते कृषिकर्मणि व्यापृता अभवन्। कृषौ बीजानाम्, उर्वरकस्य, आधुनिकयन्त्राणाम्, श्रमिकाणां च निवेशो भवति। कृषिकार्ये अनुकूलस्थलाकृतेः, उर्वर मृत्तिकायाः, अनुकूलजलवायोश्चावश्यकता भवति। यस्यां भूमौ सस्योत्पादनं भवति सा कृषिभूमिः कथ्यते। कृषिभूमौ सेचनस्यापि सुव्यवस्था भवितुमर्हति। मानवा अन्ये प्राणिनश्च यत् किमपि खादन्ति तानि सर्वाण्यपि कृषेरुपजानि सन्ति। अतः कृषिर्जीवनस्य विकल्परहित आधारो विद्यते।

तृतीयः पाठ

# सूक्तिः

## पाठप्रवेशः

छात्राः- (कक्षायां गुरोः प्रवेशानन्तरम्) नमस्काराः गुरवः !

गुरुः- नमस्काराः, नमस्काराः, उपविशत । यूयं कुशलाः स्थ ?

छात्राः- (उपविश्य) आम्, वयं कुशलाः स्मः ।

सृष्टिः- भवान् कुशली अस्ति ?

गुरुः- आम्, अहमपि कुशली अस्मि ।

सृष्टि - भो गुरो ! अद्य वयं किं पठामः ?

गुरुः- अद्य वयं सच्चरित्रनिर्माणविषये वार्तालापं कुर्मः ।

छात्राः- कृपया उच्यताम्, वयं श्रवणायोत्सुकाः स्मः ।

गुरुः- सच्चरित्रनिर्माणाय अस्माभिः सर्वप्रथममनुशासनं पालनीयं भवति । यतो हि अनुशासनमस्माकं समेषां भूषणमस्ति । अनुशासनरतान् जनान् सर्वे प्रशंसन्ति । तस्य यत्र तत्र चर्चा भवति । अतः यूयं प्रतिदिनं मातरं पितरञ्च नमत । तेषामाशीर्वादं प्राप्य जीवने सफलाः भविष्यथ । अन्यान् मान्यजनान् अपि नमत, ते अपि युष्माकं पथप्रदर्शकाः सन्ति । गृहे समागतानां अतिथीनां स्वागतं कुरुत । तैः सह वार्तालापञ्च कुरुत । कदापि दर्पं न कुरुत, मिथ्या च न वदत । स्वस्यानुजमनुजाञ्च पाठयत । सुगुणं शिक्षयत, दुर्गुणञ्च वारयत । सदैव विद्याभ्यासं कुरुत । क्रीडाकाले मित्रैः सह विवादं न कुरुत । एका उक्तिरपि अस्ति-

यदि सत्सङ्गतिरतो भविष्यसि भविष्यसि ।<br>
अथ दुर्जनसंसर्गे पतिष्यसि पतिष्यसि ॥

एतेनापि ज्ञायते यदस्माकं कृते सच्चरित्रमावश्यकमस्ति । अतः सच्चरित्रनिर्माणाय वयमुद्यताः भवेम । किं यूयं सच्चारत्रनिर्माणे प्रयतमाना भवथ ?

छात्रा : वयं प्रयतिष्यामहे गुरो ।

| | |
|---|---|
| विद्यार्थीहरू | (कक्षामा गुरुको प्रवेश भएपछि उठेर) नमस्कार गुरु ! |
| गुरु | नमस्कार, नमस्कार, बस ।तिमीहरू सन्चै छौ ? |
| विद्यार्थीहरू | (बसेर) हजुर, हामीहरू सन्चै छौँ । |
| सृष्टि | हजुर सन्चै हुनुहुन्छ ? |
| गुरु | म पनि सन्चै छु |
| सृष्टि | गुरु ! आज हामी के पढ्छौँ ? |
| गुरु | आज हामीहरू सच्चरित्रनिर्माणम् भन्ने विषयमा चर्चा गर्ने छौँ । |
| विद्यार्थीहरू | कृपया भन्नुहोस् हामीहरू सुन्नका लागि उत्सुक छौँ । |
| गुरु | सच्चरित्र निर्माणका लागि सर्वप्रथम हामीहरूले अनुशासनको पालना गर्नुपर्दछ किनभने अनुशासन हामी सबैको गहना हो । अनुशासित मानिसहरूलाई सबैले प्रशंसा गर्दछन् । उसको सबैतिर चर्चा हुन्छ । त्यसैले तिमीहरू हरेक दिन बुबाआमालाई नमस्कार गर । उहाँहरूको आशीर्वाद पाएर जीवनमा सफल हुने छौ । अरू मान्यजनलाई पनि नमस्कार गर । उहाँहरू पनि तिमीहरूका लागि पथप्रदर्शक हुनुहुन्छ । घरमा आएका अतिथिहरूको स्वागत गर । उहाँहरू सँग कुराकानी गर । कहिले पनि घमन्ड नगर । झुटो न बोल । आफ्ना भाइबहिनीलाई राम्रोसँग पढाऊ । राम्रो कुरा सिकाऊ र दुर्गुण हटाऊ । सधैँ विद्याको अभ्यास गर । खेल्ने समयमा साथीहरूसँग झगडा नगर । एउटा उक्ति पनि छ-<br><br>असल व्यक्तिको सङ्गत गर्यौ भने तिमी भविष्यमा असल व्यक्ति बन्ने छौ । यदि खराब व्यक्तिको सङ्गत गर्यौ भने तिमी खराब व्यक्ति बन्दछौ ।<br><br>यसबाट पनि सच्चरित्र आवश्यक छ भन्ने बुझिन्छ । त्यसैले सच्चरित्र निर्माणका लागि हामीहरू उद्यत बनौँ । के तिमीहरू सच्चरित्र निर्माणका लागि प्रयास गर्छौ ? |
| विद्यार्थीहरू | हामी प्रयास गर्ने छौँ गुरु । |

## मूलपाठः सूक्तिः

अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन जयेत् सत्येन चानृतम् ॥

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पः दंशति कालेन दुर्जनस्तु पदे पदे ॥

वृत्तं यत्नेन संरक्षेत् वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजाः बलिनो भवन्ति।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥

१. अन्वयः

अक्रोधेन क्रोधम् जयेत्, साधुना असाधुं जयेत्, दानेन कदर्यं जयेत्, सत्येन च अनृतं जयेत् ।

सरलार्थः

क्रोधरहितेन (मित्रवत्) व्यवहारेण क्रोधं जयेत् । सच्चरित्रेण दुश्चरित्रं जयेत् । दानेन कृपणतां जयेत् । सत्येन असत्यं जयेत् ।

रिसाएको व्यक्तिलाई आफू नरिसाई मित्रवत् व्यवहारले उसको मन जित्नुपर्दछ । नराम्रो आचरण भएका व्यक्तिलाई राम्रो आचरणद्वारा जित्नुपर्दछ । लोभी व्यक्तिलाई आफूले केही कुरा दिएर जित्नुपर्दछ भने असत्य बोल्ने व्यक्तिलाई आफूले सत्य बोलेर जित्नुपर्दछ ।

२. अन्वयः

धर्मसर्वस्वं श्रूयतां श्रुत्वा च एव आत्मनः प्रतिकूलानि परेषां न समाचरेत् इति अवधार्यताम् ।

सरलार्थः

शास्त्रप्रवीणैः गुरुभिः सह सङ्गतिं कृत्वा धर्मतत्त्वं ज्ञायताम् । ज्ञात्वा च यद् मम कृते अप्रियं भवति तत् परस्य कृते अपि अप्रियं भवतीति विचार्य परसुखप्रदानं धर्मः, परपीडाप्रदानमधर्म इति निर्णीयताम् ।

शास्त्रमा कुशल गुरुहरूसँग सङ्गत गरेर धर्मतत्त्वलाई बुभ्नुपर्दछ । धर्मतत्त्वलाई बुझेर जुन कुरा आफ्ना लागि अप्रिय लाग्दछ सोही कुरा अरूका लागि पनि अप्रिय नै हुन्छ भन्ने जान्नुपर्दछ । विशेषगरी बुद्धिमान् व्यक्तिले अरूलाई सुख दिनु धर्म र दुःख दिनु अधर्म हो भनेर बुभ्नुपर्दछ ।

३. अन्वयः

सर्पदुर्जनयोः मध्ये सर्पः वरं (भवति), दुर्जनः वरं न भवति, सर्पः कालेन दंशति, दुर्जनः तु पदे पदे दंशति ।

सरलार्थः

सर्पदुष्टजनयो सर्पः श्रेयस्करः भवति, दुष्टजनस्तु श्रेयस्करो न भवति । यतः सर्पः समये समये दंशति परन्तु दुष्टजनस्तु प्रतिक्षणं दंशति ।

सर्प र खराब मान्छेमा सर्प नै मानिसका लागि कल्याणकारक हुन्छ किनभने सर्पले एकपटक टोकेपछि फेरि दुःख दिँदैन तर खराब व्यक्तिले पाइला पाइलामा दुःख दिन्छ ।

४. अन्वयः

(जनः) वृत्तं यत्नेन संरक्षेत्, वित्तम् एति याति च, वित्ततः क्षीणः अक्षीणः(भवति), वृत्ततः तु हतो हतः ।

सरलार्थः

मानवः यत्नपूर्वकं साध्वाचरणं पालयेत् । धनं तु कदाचिदायाति कदाचिद् गच्छति (व्येतं भवति) । धनेन हीनः जनः कदापि हीनः न भवति परन्तु चरित्रेण हीनस्तु सर्वस्वहीनो भवति ।

मानिसले जसरी पनि आफ्नो चरित्रलाई जोगाउनुपर्दछ । धन त कहिले आउँछ कहिले जान्छ । धनले हीन व्यक्ति कहिले पनि नराम्रो हुँदैन तर चरित्रले हीन व्यक्ति सम्पूर्ण कुराले नराम्रो हुन्छ ।

५. अन्वयः

सर्पाः पवनं पिबन्ति ते दुर्बलाः न च (सन्ति), वनगजाः शुष्कैः तृणैः बलिनः भवन्ति, मुनिवराः च कन्दैः फलैः कालं गमयन्ति, (अतः) सन्तोष एव पुरुषस्य परं निधानम् (अस्ति) ।

सरलार्थः

सर्पाः वायुमण्डलस्य दूषितं पवनं पिबन्ति तथापि ते बलहीनाः न विद्यन्ते । वनगजाः शुष्कं तृणं खादित्वा अपि बलवन्तः सन्ति । महर्षयः कन्दफलं खादित्वैव जीवनं यापयन्ति । ते अपि प्रसन्नाः सन्ति । अतः वयं जानीमः यत् सन्तोष एव अस्माकं जीवनस्य सर्वोत्तमं धनमस्ति ।

सर्पहरू हाम्रो वायुमण्डलमा रहेको दूषित हावा पिउँछन् तर पनि तिनीहरू कमजोर छैनन् । वनमा बस्ने हात्तीहरू वनका सुकेका घाँसहरू खाएर पनि ज्यादै बलिया छन् । कन्दमूल खाएर मुनिहरू धेरै समय बिताउँछन् । त्यसैले आफूसँग भएको वस्तुमा सन्तोष गर्नु नै सबैभन्दा ठुलो हो ।

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| अक्रोधेन | क्रोधरहितेन | नरिसाइकन | Without anger |
| जयेत् | जयतु | जितोस् | overcomn |
| असाधुम् | दुश्चरित्रम् | खराब आचरण | Bad conduct |
| अनृतम् | मृषा | असत्य | Lie |
| धर्मसर्वस्वम् | धर्मस्य मुख्यसारम् | धर्मको मूल तत्त्व | The essence of religion |
| अवधार्यताम् | निर्णीयताम् | निर्णय गर | Make a decision |
| प्रतिकूलानि | विपरीतानि | विपरीत कुराहरू | Opposite things |
| वरम् | श्रेष्ठम् | कल्याणकारक | Ausloicions |
| वृत्तम् | सच्चरितम् | सदाचार | Virtue |
| वित्तम् | धनम् | धनसम्पत्ति | Property |

| | | | |
|---|---|---|---|
| अक्षीणः | अनष्टः | नाश नभएको | Not destroyed |
| हतो हतः | अत्यन्तमेव नष्टः | ज्यादै नष्ट भएको | Totally destroyed |
| पवनम् | वायुम् | हावालाई | To the wind |
| दुर्बलाः | बलहीनाः | कमजोर | Weak |
| तृणैः | ग्रासैः | घाँसद्वारा | With grass |
| मुनिवराः | महर्षयः | ऋषिहरू | Sages |
| गमयन्ति | यापयन्ति | बिताउँछन् | Spand |
| निधानम् | धनम् | सम्पत्ति | Property |

## अभ्यासः

### श्रवणं भाषणं च

१. **पाठस्य पद्यानां लयोच्चारणपूर्वकं सामूहिकवाचनं कुरुत ।**

२. **पाठस्य एकैकं पद्यमेकाकी श्रावयत ।**

३. **अधो निर्दिष्टानि पदानि स्पष्टमुच्चारयत ।**

अवधार्यताम्, धर्मसर्वस्वम्, अक्षीणः, वृत्तम्, वित्तम्, अनृतम्

४. **अधः प्रदत्तस्य श्लोकस्य अन्वयं श्रावयत ।**

सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पः दंशति कालेन दुर्जनस्तु पदे पदे ॥

५. **शिक्षकस्य साहा···येन अधस्तनस्य श्लोकस्य नेपाल्यामर्थं श्रावयत ।**

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

६. **शिक्षकात् सदाचारस्य विषये श्रुत्वा परस्परं विमृशत ।**

७. **लयोच्चारणपूर्वकमधस्तनस्य श्लोकस्य वाचनं कुरुत ।**

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजाः बलिनो भवन्ति ।

कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥

८. **श्रवणपाठं श्रुत्वा सत्यकथने 'आम्' असत्यकथने 'न' इति वदत ।**

(क) अन्नादेव सर्वाणि भूतानि जायन्ते ।

(ख) अन्नाद् भूतानि न जीवन्ति ।

(ग) अन्नं परिचक्षीत ।

(घ) आकाशे पृथिवी प्रतिष्ठिता अस्ति ।

(ङ) सर्वमन्ने प्रतिष्ठितमस्ति ।

## पठनम्

१. **अधस्तनस्य अनुच्छेदस्य पठनं कुरुत ।**

विद् इत्यस्माद्धातोर्निष्पन्नस्य वेदशब्दस्यार्थः ज्ञानमस्ति । वेदस्यापरं नाम श्रुतिरस्ति । वेदाश्चत्वारः सन्ति । यथा- ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति । प्रथमतः ऋग्वेदस्य नाम आयाति । ऋचां समूह ऋग्वेदः कथ्यते । वेदोऽयं प्राचीनतमग्रन्थरूपेणापि परिचीयते । एतस्य शाखाः सम्प्रति लुप्ताः सन्ति । केवलं शाकलशाखा एव प्राप्यते । ऋग्वेदे वेदस्य महत्त्वं प्राप्यते । यजुर्वेदस्य च द्वौ भागौ स्तः शुक्लयजुर्वेदः कृष्णयजुर्वेदश्च । शुक्लयजुर्वेदः नेपालदेशे प्रसिद्धो वर्तते । कृष्णयजुर्वेदश्च भारतदेशे प्रसिद्धः । शुक्लयजुर्वेदे मन्त्राणां सङ्ग्रहोऽस्ति । कृष्णयजुर्वेदे मन्त्रैः सह विनियोगवाक्यानि सन्ति । विशेषतः यजुर्वेदः कर्मप्रधानो वर्तते ।

सामवेदः गानविद्यारूपेण प्रसिद्धः । अस्य मन्त्राः लयबद्धरूपेण गीयन्ते । अतः गानविद्यायाः स्रोतः सामवेदः अस्ति । अस्य वेदस्य सहस्रं शाखाः सन्ति, परमधुना सर्वाः उपलब्धाः न सन्ति । अथर्ववेदस्य मन्त्रास्तु ऋग्वेदादेव गृहीताः सन्ति । विशेषतः मारणमोहनात्मकाः मन्त्रा अत्र सन्ति । अस्माकं समाजे प्रचलिता तन्त्रमन्त्रपद्धतिः अथर्ववेदस्यैवास्ति । वेदस्य षडङ्गानि सन्ति शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषमिति । प्रत्येकं वेदस्य पृथक् पृथक् ब्राह्मणग्रन्थाः आरण्यकंग्रन्थाः उपनिषद्ग्रन्थाश्च सन्तिं ।

उपनिषदपि वेदस्यैकः भागोऽस्ति । उपन्युपसर्गपूर्वकात् सद्धातोः उपनिषद्-शब्दो निष्पद्यते । उपनिषद् जीवब्रह्मणोरैक्यसाक्षात्कारं प्रतिपादयति । एतावता प्रकारेण पौरस्त्यवाङ्मये वेदस्यापूर्वस्थानं विद्यते किल ।

संस्कृतको विद् - ज्ञाने भन्ने धातुबाट निष्पन्न वेद शब्दको अर्थ ज्ञान हो । वेदको अर्को नाम श्रुति हो । वेद चार भागमा विभक्त छन् । ती हुन्- ऋग्वेद, यजुर्वेद, सामवेद, अथर्ववेद । ऋचाहरूको समूहलाई नै ऋग्वेद भनिन्छ । यो वेद विश्वको सबैभन्दा पुरानो ग्रन्थको रूपमा चिनिन्छ । यसका धेरै शाखाहरू लोप भइसकेका छन् । अहिले केवल शाकलशाखा मात्र उपलब्ध छ । ऋग्वेदमा वेदको महत्त्व बताइएको छ । यजुर्वेदका दुई भाग छन् । शुक्लयजुर्वेद र

कृष्णयजुर्वेद । शुक्लयजुर्वेद नेपालमा प्रसिद्ध छ । कृष्णयजुर्वेद भारतमा प्रसिद्ध छ । शुक्लयजुर्वेद मन्त्रहरूको सङ्ग्रह हो । कृष्णयजुर्वेदमा भने मन्त्रसहित विनियोग वाक्यहरू रहेका छन् । विशेषगरी यजुर्वेद कर्मप्रधान रहेको छ ।

सामवेद सङ्गीतविद्याका रूपमा प्रसिद्ध छ । सामवेदका मन्त्रहरू लयबद्धरूपले गाइन्छन् । त्यसैले सङ्गीतविद्याको स्रोत सामवेद हो । सामवेदका हजारौँ शाखा छन् तर अहिले सबै उपलब्ध छैनन् । अथर्ववेदका मन्त्रहरू ऋग्वेदबाट नै ल्याइएका हुन् । यो विशेष गरी मारण र मोहनासम्बन्धी मन्त्रमा आधारित छ । हाम्रो समाजमा प्रचलित तन्त्रमन्त्र पद्धति अथर्ववेदमा रहेको छ । वेदका छ अङ्ग छन् । ती हुन् -शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द र ज्योतिष ।

वेदमा ब्राह्मण, आरण्यक र उपनिषद् गरी छुट्टाछुट्टै ग्रन्थहरू रहेका छन् । उपनिषद् पनि वेदको एउटा भाग हो । उप नि उपसर्गपूर्वक संस्कृतको सद्धातुबाट उपनिषद्-शब्द बन्दछ । उपनिषद्ले जीव र ब्रह्मको ऐक्यसाक्षात्कारलाई प्रतिपादन गरेको छ । यसप्रकार पौरस्त्य वाङ्मयमा वेदको अपूर्व स्थान रहिआएको छ ।

**२. उपरि प्रदत्तं पाठं पठित्वा उत्तरं दत्त**

(क) वेदशब्दः कथं निष्पद्यते ?

(ख) अधुना ऋग्वेदस्य का शाखा समुपलब्धा अस्ति ?

(ग) वेदस्यापरं नाम किम् ?

(घ) यजुर्वेदः कुत्र प्रचलितः ?

(ङ) सङ्गीतविद्यायाः चर्चा कुत्रास्ति ?

(च) तन्त्रविद्यायाः महत्त्वं कुत्र प्राप्यते ?

(छ) उपनिषद्-शब्दः कथं निष्पद्यते ?

(ज) वेदस्य षडङ्गानि कानि ?

**३. लेख्यचिह्नानि विचार्य पाठस्य द्रुतवाचनं कुरुत ।**

**४. नेपालिभाषायामर्थं वदत**

श्रुतिः, सम्प्रति, पृथक्, गृहीतः, प्राप्यते

**५. अधः प्रदत्तानि उत्तराणि पठित्वा प्रश्नान् निर्मात**

(क) वेदाश्चत्वारः सन्ति ।

(ख) यजुर्वेदस्य द्वौ भागौ स्तः ।

(ग) वेदस्य षडङ्गानि सन्ति ?

(घ) सङ्गीतविद्यायाः स्रोतः सामवेदो वर्तते ।

(ङ) कृष्णयजुर्वेदः भारतदेशे प्रसिद्धः ।

६. **अर्थं विचार्य अधः प्रदत्तं श्लोकं पठत**

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मानस्तुष्टिरेव च ॥

७. **शिक्षकाद् वेदविषयिणीं वाणीं श्रुत्वा परस्परं विमृशत ।**

## लेखनम्

१. **स्वस्य पुस्तिकायामधः प्रदत्तान् शब्दान् शुद्धान् कृत्वा सारयत ।**

पर्तिकूलानी, पिवन्ति, भबन्ति, स्रुएताम्, अछिणः

२. **नेपालिभाषायामर्थं लिखत**

अनृतम् , दुर्बलाः, वित्तम्, वृत्तम्, कदर्यः, निधानम्

३. **पाठस्याधारेण उत्तरं लिखत**

(क) जनः क्रोधं कथं जयेत् ?

(ख) सर्पाः कीदृशाः सन्ति ?

(ग) दुर्जनः किं करोति ?

(घ) मुनिवराः कालं कथं यापयन्ति ?

(ङ) धर्मसर्वस्वं किम् ?

(च) जनः यत्नेन कं संरक्षेत् ?

४. **अधोनिर्दिष्टान् शब्दान् प्रयुज्य वाक्यानि रचयत**

वित्तम्, प्रतिकूलम्, निधानम्, समाचरेत्, अक्षीणः, जयेत् ।

५. **सान्वयं संस्कृतभाषायाम् अर्थं लिखत**

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥
सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पः दंशति कालेन दुर्जनस्तु पदे पदे ॥

६. **कोष्ठकस्य निर्देशानुसारेण रिक्तस्थानं पूरयत।**

(क) तानि मन्दिराणि ........सन्ति । (सुन्दर)

(ख) माता.........पाचयति । (भोजन)

(ग) अनुजः ..... भोजनं खादति । (चमस)

(घ) माता ......पुस्तकानि आनयति। (पुत्र)

(ङ) ..........पत्राणि पतन्ति । (वृक्ष)

(च) ......पुत्रः पटुः अस्ति । (राम)

(छ) ........छात्राः पठन्ति । (विद्यालय)

७. **परस्परं मेलयत**

| समूह क | समूह ख |
|---|---|
| अनृतम् | समयः |
| सर्पः | दुर्जनः |
| गजः | भुजङ्गः |
| कालः | मृषा |
| खलः | हस्ती |

८. **स्वकीयैः शब्दैः नेपालिभाषायां भावार्थं लिखत**

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजाः बलिनो भवन्ति।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥

९. **"सदाचारः" इति विषये अनुच्छेदमेकं रचयत ।**

१०. **अनुच्छेदं पठित्वा शिक्षकस्य साहाय्येन नेपालिभाषायामर्थं लिखत**

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकं सुचरितानि । तानि त्वयोपास्यानि ।

## व्याकरणानुशीलनम्

**क्त्वाप्रत्ययः**

पूर्वकालिक- क्रियासु क्त्वाप्रत्ययस्य प्रयोगो भवति । धातौ त्वा एव संयोजनं भवति ।

यथा-

पठ् + क्त्वा(त्वा) = पठित्वा

खाद् + क्त्वा(त्वा) = खादित्वा

गम् + क्त्वा(त्वा) = गत्वा

**तुमुन्- प्रत्ययः**

उत्तरकालिकक्रियासु तुमुन्-प्रत्ययस्य प्रयोगो भवति ।

धातौ तुम् एव संयोजनं भवति ।

पठ् + तुमुन् (तुम्) = पठितुम्　　　　हस् + तुमुन् (तुम्) = हसितुम्

गम् + तुमुन् (तुम्) = गन्तुम्

**दीर्घसन्धिः**

अकः सवर्णे दीर्घः ।

यथा-

अ / आ + अ / आ = आ　　　　इ / ई + इ / ई = ई

उ / ऊ + उ / ऊ = ऊ　　　　ऋ / ॠ + ऋ / ॠ = ॠ

## रचनात्मकः अभ्यासः

**बोधः**

**साधकतमं करणम्**

कस्याश्चन क्रियायाः सिद्धौ साक्षाद् उपकारकं कारकं करणं भवति । अर्थात् क्रियासिद्धये यत् साधनं भवति तत् करणम् भवति । तत्र तृतीया विभक्तिः सम्पद्यते । यथा - बालकः कलमेन लिखति । अत्र लेखनक्रियायाः सिद्धये साधनम् कलमः वर्तते । अतः कलमः करणमस्ति । कलमेन इति तृतीयाविभक्तिः ।

**उदाहरणे**

रामः बाणेन बालिनं जघान ।　　　　छात्रः यानेन विद्यालयं जगाम ।

२. **करणपदेन उत्तराणि लिखत**

(क) धनिकः केन विदेशम् गच्छति ?(वायुयान)

(ख) वानरः केन फलानि खादति ? (मुख)

(ग) मानवाः काभ्याम् चलन्ति ? (चरण)

(घ देवः कया सह गच्छति ? (लता)

(ङ) पिता केन पुत्रम् ताडयति ? (दण्ड)

(च) श्वेता कैः सह पठति ? (अस्मद्)

(छ) रामः काभिः सह विवादम् करोति ?(तत्)

(ज) हर्कबहादुरः काभ्याम् शब्दान् आकर्णयति ? (कर्ण)

(झ) यूयम् कया सह खेलथ ? (रमा)

(ञ) बालकाः कैः देवम् पूजयन्ति ? (पुष्पः)

३. **तृतीया-विभक्तिषु रूपाणि लिखत**

बाला, माला, गौरी, हरि, मुनि, फल, चक्र, मित्र, अस्मद्, युष्मद्, राम, रमा

## अभ्यासः

१. **प्रत्ययान् पृथक् कुरुत**

ग्रहीतुम्, क्रीडितुम्, चलितुम्, जीवितुम्, पतितुम्, श्रोतुम्, ज्ञातुम्, कर्तुम्, प्रवेष्टुम्, बोद्धुम् ।

२. **प्रत्ययान् योजयित्वा निष्पन्नान् शब्दान् लिखत**

लिख् + क्त्वा, वद् + क्त्वा, हस् + क्त्वा, खाद् + क्त्वा, पा + क्त्वा, स्था + क्त्वा, नी+ क्त्वा, स्ना + क्त्वा, भू + क्त्वा, नम् + क्त्वा, दृश् + क्त्वा ।

३. **सन्धिपेदं कुरुत**

चिकित्सा + आलयः, सूर्य + अस्तः, क्षिति + ईशः, कवि + इन्द्र नदी + ईशः, भानु+ उदयः, साधु +उवाच, सु + उक्तयः, वधू + उवाचः, मही + इन्द्रः, अति + इव, च + अस्तिः, पितृ + ऋणम्, मातृ + ऋणम् ।

४. **सन्धिविच्छेदं कुरुत**

जलाशयः, इच्छानुसारम्, सूक्तिः, सिन्धूर्मिः, भूर्ध्वम्, श्रीशः, कवीश्वरः, मुनीशः, इन्दूदयः, हरीच्छा, तथापि, वृत्रासुरः ।

५. **अधोलिखितानि पदानि प्रयुज्य वाक्यानि रचयत**

कृत्वा, मिलित्वा, दत्वा, गृहीत्वा, जीवितुम्, वक्तुम्, ग्रहीतुम्, स्रष्टुम् ।

### श्रवणपाठः

अन्नाद् प्रजाः प्रजायन्ते । याः काश्च पृथिवीं श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः । अन्नं हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नं हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यते अत्ति च भूतानि । तस्मादन्नं तदुच्यत इति ।

अन्नं बहु कुर्वीत । तद् व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन ।

चतुर्थः पाठः

# मित्रतापरीक्षणम्

## पाठप्रवेशः



सन्मित्रस्य दर्शनेनैव नयनयोः प्रीतिरूपाणि अश्रूणि उद्भवन्ति, मनसि च महदानन्दः प्रसरति । सम्पत्तौ विपत्तौ च समानं व्यवहारं कुर्वाणाः सुहृदस्तु कदाचिदेव, क्वचिदेव मिलन्ति । सम्पत्तौ केवलं धनस्य लोभेन मैत्रीं प्रदर्शयन्तः अनेके जनाः अस्माकं जीवने प्रतिपदं प्राप्यन्ते । तेषां मैत्री वास्तविकी न भवति । जीवने आगता जनाः सन्मित्ररूपाः सन्ति उत दुर्मित्ररूपाः ? इति परीक्षणं विपत्समये भवति । विपदि अपि ये साहचर्यं कुर्वन्ति, व्यवहारपरिवर्तनं च न कुर्वन्ति, ते सन्मित्ररूपाः सन्ति । ये च मित्रस्य विपदि पलायन्ते, मित्रेण सद्व्यवहारं च न कुर्वन्ति, ते दुर्मित्ररूपाः सन्ति । अतो विपदेव मित्रत्वपरीक्षणस्य निकषशिला वर्तते ।

मित्रं प्रीतिरसायनं नयनयोः आनन्दनं चेतसः, पात्रं यत् सुखदुःखयोः सममिदं पुण्यात्मना लभ्यते ।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलाः, ते सर्वत्र मिलन्ति तत्त्वनिकष-ग्रावा तु तेषां विपत् ॥

असल मित्रलाई देख्नेबित्तिकै आँखामा हर्षाश्रु भरिन्छन् र मनमा आनन्दको प्रसार हुन्छ । असल मित्रले सुख र दुःखमा समान व्यवहार गर्दछ । समृद्धिको अवस्थामा धनका लोभले मित्रता प्रदर्शन गर्नेहरू त जीवनमा पाइलैपिच्छे भेटिन्छन् । त्यस्ता मानिसको मित्रता असल हो कि होइन भन्ने कुराको परीक्षण विपत्तिले गर्दछ । विपत्तिकालमा व्यवहार परिवर्तन गर्दछन् भने ती असल मित्र होइनन् । त्यसकारण विपत्ति मित्रता परीक्षणको कसी हो ।

**मूलपाठः** 

## मित्रतापरीक्षणम्

“गच्छतु भवान् । मित्रसमीपे गमनाय का लज्जा ?” सुशीला सुदामानं कृष्णस्य पार्श्वे गन्तुम् अनुरुणद्धि । “न प्रिये ! हठं न कुरु । इदानीं मम अवस्था समीचीना नास्ति । एतावद्वर्षानन्तरं मित्रस्य पार्श्वे जीर्णवस्त्रः रिक्तपाणिश्च कथं गच्छानि ? कदाचित् तु ममापि अवस्था समीचीना भवेत् । तदा सुन्दराणि वस्त्राणि परिधाय मित्रस्य कृते सौदायिकं च किमपि समीचीनं गृहीत्वा गमिष्यामि ।” सुदामा कथयति ।

“पञ्चदशभ्यो वर्षेभ्यो भवान् इत्थमेव कथयन् अस्ति । कदाचिदपि भवतः आर्थिकी अवस्था न सुदृढायते । कदा गमिष्यति भवान् ?” सुशीला ईषद् रोषं प्रकटयति । “किं कथयसि प्रिये ? किम् अहम् कृष्णेन मेलितुं नेच्छामि ? स मम सखा अस्ति, बाल्यकालिकः सखा, मम प्रियतमः सखा । यस्य स्मरणमात्रेण नितरां मोमुद्यते मे मनः ! मया गुरुकुले कृष्णेन सह व्यतीतः कालः मम जीवनस्य स्वर्णकालः अस्ति ! कृष्णम् अदृष्ट्वा अहं क्षणमपि स्थातुं न शक्नोमि स्म । कृष्णः अपि मम सामीप्यं नितराम् इच्छति स्म । अहं तु तानि एव दिनानि स्मारं स्मारं कृष्णम् एव चित्ते धृत्वा दिनानि यापयन् अस्मि । कदा मित्रेण कृष्णेन मे मेलनं भवेत् ? इति विचार्य आदिनम् आरात्रि च मनो व्याकुलं भवति ।” सुदामा स्वान्तं प्रकटयति ।

सुशीला सुदामकृष्णयोः मैत्रीं श्रुत्वा द्रवीभवति । क्षणं किमपि विचार्य पुनः कथयति, “भवतः कृष्णेन सह तादृशी मैत्री वर्तते चेत् कृष्णसमीपं गत्वा किमपि याचताम् । स तु द्वारकाधीशो वर्तते । सः अवश्यमेव भवत्साहाय्यं करिष्यति । किमर्थम् अत्र दरिद्रो भूत्वा तिष्ठति ?” सुदामा पुनः कथयति, “न सुशीले ! तथा न कर्तव्यम् । कृष्णः अधुना द्वारकाधीशः अस्ति । तस्य पार्श्वे गत्वा अहं याचनां करोमि चेत् सः अवश्यं साहाय्यं करिष्यति परं याचनं मित्रतायाः दूषणम् अस्ति । अहं कृष्णस्य मैत्रीं कथञ्चदपि दूषितां कर्तुं नेच्छामि । अतः कृष्णस्य पार्श्वे गत्वा याचनं मत्तः न सम्भवति ।”

धनाभावेन सुशीला दैनिकव्यवहारसञ्चालनेऽपि काठिन्यम् अनुभवन्ती अस्ति । सा याचनम् अपि कुत्र कुर्यात् ? सर्वेभ्यः सा पूर्वमेव ऋणं याचितवती अस्ति । याचितस्य ऋणस्य प्रत्यावर्तने तस्याः सामर्थ्यं नास्ति । प्रतिवेशिनाम् अग्रे गन्तुम् अपि सा लज्जाम् अनुभवति । सा स्वावस्थां स्मरति, स्वशरीरे वर्तमानं जीर्णवस्त्रं पश्यति, ततः कथयति, “याचनं न कर्तव्यं भवता । यदि कृष्णः भवतः सन्मित्रम् अस्ति चेद् भवतः अवस्थां दृष्ट्वा एव किमपि साहाय्यम् अवश्यं करिष्यति ।” “सुशीले ! आशा हि परमं दुःखमस्ति । कृष्णे मम मैत्री निर्मला वर्तते । अहम् अपेक्षया तत्र गच्छामि चेद् मम मैत्र्यां दोषः उत्पद्यते । पुनः कृष्णो यदि अस्माकं भावनां न बुध्येत, तर्हि आवयोः मैत्र्यां त्वं संशयं करिष्यसि । मम मनसि कृष्णं प्रति आस्था न्यूना भवितुं शक्नोति । अतः तव वचनानुसारेण धनाशया अहं कृष्णसमीपं न गच्छामि ।” सुदामा सुशीलां मैत्रीं परिचाययितुं प्रयतते ।

“याचनं न करोतु भवान्, कृष्णात् कस्यापि वस्तुनः अपेक्षामपि न करोतु परं मित्रेण सह मेलने का हानिः ? केवलं मनसः सन्तुष्टये एव अपि एकवारं गच्छतु । भवान् कृष्णं स्मृत्वा कियद्दुःखितो भवतीति मया अनुभूतमस्ति । तेन गच्छतु । मित्रेण मेलने का लज्जा ?” सुशीला पत्युः दुःखेन दुःखिता सती

गमनाय अनुरुणद्धि । "लज्जा वर्तते सुशीले ! लज्जा वर्तते । मया बाल्यकाले लोभवशात् कृष्णं प्रति एकः अपराधः विहितः अस्ति । अद्य तस्यैव अपराधस्य कारणेन अहं दरिद्रः सञ्जातः अस्मि । तेनैव अपराधेन अहं सदा ग्लानिम् अनुभवामि । मम मनः तस्यैव कारणेन प्रायेण दुःखितं भवति । कृष्णः अपि अवश्यं तत् स्मरति । अहं कृष्णस्य अग्रे कथं स्वमुखं दर्शयानि ? अहम् अपराधी अस्मि सुशीले ! अपराधी अस्मि ।" सुदामा नेत्रे अश्रुभिः प्रपूर्य अकस्मात् शोकान्वितो भवति ।

सदा आदर्शव्यवहारं कुर्वाणः, सदा सदाचारे रममाणः, सदा निरपेक्षतया कर्मयोगं विदधानश्च स्वपतिः शोकान्वितः सन् आत्मानम् अपराधिनं कथयति । सुशीला विस्मिता जायते । सा स्वपत्यौ विश्वासं दृढीकुर्वन्ती जिज्ञासां प्रकटयति, "भवान् अपराधी ? न विश्वसिमि अहम् । भवता कथञ्चिदपि अपराधो विहितो न स्यात् । परं किमर्थं भवान् आत्मानम् अपराधिनं कथयति ?" सुदामा अश्रूणि प्रमृजन् कथयति, "सुशीले ! मया अपराधः विहितः अस्ति । गुरुमात्रा आवयोः कृते प्रदत्ताः चणकाः बुभुक्षावशाद् लोभेन अहम् एकाकी एव भक्षितवान् आसम् । कृष्णः अपि तदा क्षुधया पीडितः स्यात् । मयि तादृशी दुर्बुद्धिः तदा किमर्थं समुत्पन्ना ? अधुना यदा अहं तद्घटनां स्मरामि, तदा ग्लानिम् अनुभवामि । आत्मानं च अपराधिनं मन्ये । मम दारिद्र्यस्य कारणं च तदेव अस्तीति मत्वा अहं सदैव दुःखम् अनुभवन् अस्मि । अतः कृष्णस्य पार्श्वे गमनाय मम मनसि उत्साहशक्तिः एव न जायते ।"

"बाल्ये अज्ञानवशाद् जातायाः त्रुटेः कारणेन भवान् एवं दुःखी किमर्थं भवति ? कृष्णः तां घटनां विस्मृतवान् स्यात् । यदि कृष्णस्य स्मृतौ सा घटना वर्तते, तर्हि भवान् क्षमायाचनं विधातुं शक्नोति । कृष्णः अवश्यं क्षमां करिष्यति । मनसि इत्थम् अपराधबोधं विधाय न स्थातव्यम् ।" सुशीला सुदामानं सान्त्वयन्ती कथयति । सुदामा चिन्तयति, "सुशीला सत्यं कथयति । एतावद्वर्षाणि यावद् मम मनसि यो भारः अस्ति, स केवलं क्षमायाचनेन न्यूनो भवति । अतो गमनम् एव उचितं स्यात् ।" स्पष्टं कथयति- "सुशीले ! त्वया कथितं तु सत्यमस्ति, अहमपि क्षमायाचनमेव उचितं मन्ये । अधुना गन्तुमपि इच्छामि परम् एतावद्वर्षानन्तरं मित्रेण सह मेलितुं रिक्तपाणिः कथं गच्छानि ? नेतव्यं सौदायिकं गृहे किमपि नास्ति ।" सुशीला क्षणं विचिन्त्य कथयति, "अद्य स्वपितु भवान् । श्वः प्रातः भवता गन्तव्यमस्ति । अहं सौदायिकस्य व्यवस्थां करिष्यामि ।" "अस्तु" इति कथयित्वा सुदामा स्वपितुं गच्छति । सुशीला च महानसे गत्वा क्षणं किमपि कार्यं विधाय स्वपिति ।

अद्य सुदामा कृष्णेन सह मेलितुं गच्छन् अस्ति । मनः प्रफुल्लं वर्तते । जीर्णेऽपि शरीरे स स्फूर्तिमनुभवति । सौदायिकरूपेण तस्य पार्श्वे सुशीलया प्रदत्ता एका पोटलिका अस्ति, यत्र चिपिटकणिकाः सन्ति । गच्छतः तस्य मनसि अनेके विचाराः जायन्ते । कदाचित् कृष्णं प्रति आशङ्का उत्पद्यते, कदाचिद् विश्वासो दृढो भवति । एवं मनसि एव विचाराणां द्वन्द्वं कारयन् सुदामा द्वारकां प्राप्नोति ।

द्वारकायाः सौन्दर्यं दृष्ट्वा कृष्णस्य समृद्ध्या सन्तुष्टः सन् स कृष्णस्य प्रासादं प्रति गच्छति । द्वारपालाः सुदामानं प्रवेशानुमतिं न ददति । सुदामा कृष्णस्य मित्रत्वेन आत्मानं परिचाययति, परं ते न विश्वसन्ति ।

सुदाम्नः दारिद्र्यं दृष्ट्वा केचित् तत्र तस्योपहासं कुर्वन्ति । सुदामा तेषाम् अवमानेन विचलितो न भवति । एतावता कालेन कृष्णसमीपं प्राप्तः स कृष्णस्य दर्शनं विना कथं प्रत्यावर्तेत ? स आत्मनः सन्देशं कृष्णं प्रति प्रापयितुं द्वारपालान् अनुरुणद्धि ।



सुदाम्नः अनुरोधम् एको द्वारपालः स्वीकरोति । कृष्णसमीपं गत्वा स कथयति, "स्वामिन् ! द्वारे कश्चिद् दरिद्रः आगत्य आत्मानं भवन्मित्रं कथयति ।" कृष्णः उत्कण्ठितः सन् कथयति, "किं स सुदामा वर्तते ?" विस्मितः सन् नेत्रे विशालीकृत्य द्वारपालः कथयति, "आम् श्रीमन् ! स स्वनाम सुदामा एव कथयति ।" "मम प्रियसख सुदामन् ! एतावद्वर्षानन्तरं त्वं मित्रम् अस्मरः ?" इति कथयन् कृष्णः द्वारं प्रति धावति । तस्य शिरसि मुकुटं नास्ति, पादयोः पादरक्षे न स्तः, धौताग्रभागः भूमिं स्पृशन् अस्ति, नेत्रे अश्रुभिः प्रपूरिते स्तः । हस्तौ अग्रे कृत्वा "सुदामन् ! मम प्रियसख !" इति कथयन् धावं धावं स द्वारं प्रति गच्छति । मार्गे आगच्छद्भिः जनैः आघट्टितः सन्, पतन्, उत्तिष्ठन् कृष्णः धावति । कृष्णस्य तादृशीम् अभूतपूर्वाम् अवस्थां दृष्ट्वा रुक्मिणी विस्मिता भवति । भृत्याश्च आश्चर्यम् अनुभवन्ति ।

"मया कृष्णदर्शनं लभ्यते न वा ? न लभ्यते चेदपि अहं प्रियसखस्य कृष्णस्य समृद्धिं स्मारं स्मारं सन्तोषेण जीवनं यापयितुं शक्नोमि ।" द्वारे प्रतीक्षमाणः सुदामा एवं चिन्तयन् उत्कण्ठितः सन् प्रासादमार्गे एव स्वनेत्रे स्थापयति । "सुदामन् ! मम प्रियसख !" इति कथयन्तं कृष्णं दूरादेव विलोक्य सुदामाऽपि हर्षाश्रुपूरितनयनः कृष्णं प्रति धावति । तथा आगच्छन्तं कृष्णं दृष्ट्वा द्वारपालाः विस्मिताः भीताश्च सन्तः सुदाम्ना सह क्षमां याचितुम् इच्छन्ति । परं सुदामा धावं धावं द्वारान्तःप्रविष्टो भवति । धावतोः तयोः मार्गे संयोगो भवति । कृष्णः सुदामानं वक्षसि निधाय हर्षाश्रुभिः सुदाम्नो वस्त्राणि आर्द्रयति । सुदामापि हर्षातिरेकेण कृष्णस्य वक्षसि बाल इव रोदिति । क्षणं यावत् तौ उभौ अपि वक्तुं न शक्नुतः । क्षणानन्तरं नेत्रे प्रमृज्य कृष्णः कथयति, "मित्र ! अन्तः प्रविश । मार्गे एव कियत्कालः व्यतीयते ?" सुदामा

शिरःसञ्चालनेन तद्वचनं स्वीकरोति । कृष्णः सुदाम्नो हस्तं गृहीत्वा तं प्रासादान्तः प्रवेशयति । कृष्णस्य निर्देशानुसारेण रुक्मिणी सुदामानं प्रणमति । कृष्णः सुदामानं स्वस्यैव आसने उपवेशयति । द्वारकाधीशस्य कृष्णस्य तथाविधं सत्कारं दृष्ट्वा अश्रुपूरितनयनः सुदामा कृतकृत्यो भवति । कुशलप्रश्नस्य औपचारिकीं वार्तां समाप्य रुक्मिण्या सहितः कृष्णः सुदामानं अनेकैः स्वादुभिः व्यञ्जनैः भोजनं कारयति । सुदामा सुशीलया प्रेषितां पोटलिकां प्रदर्शयितुं लज्जाम् अनुभवति परं "भ्रातृजायया प्रेषितं सौदायिकं मह्यं न प्रयच्छसि ?" इति कथयन् कृष्णः सुदाम्नो हस्तात् पोटलिकाम् आच्छिद्य चिपिटकणिकाः भक्षयति । अनन्तरं तयोः परस्परं प्रेमालापो जायते ।

कृष्णस्य अनुरोधेन सुदामा मासं यावद् द्वारकायां तिष्ठति । सर्वम् अपि कार्यं परित्यज्य कृष्णः सुदाम्ना सहैव तिष्ठति । "गृहे अन्नादिकं किमपि नासीत् । मासं यावत् सुशीलया किं भक्षितं स्यात् ? प्रतिवेशिनः सुशीलां प्रति कीदृशं व्यवहारं कुर्वाणाः स्युः ? सुशीलायाः दुःखनिवारणं मया कथं विधेयम् ?" इत्यादिविषयैः अन्तश्चिन्तितः अपि सुदामा बहिः कृष्णस्य समीपे तादृशं भावं कदापि न प्रकटयति । कृष्णः अपि सुदाम्नः प्रसन्नतायै सर्वथा प्रयतते । तयोः आदर्शमैत्रीं दृष्ट्वा द्वारकावासिनः सर्वे परं विस्मयम् लभन्ते । वसुदेवादयो मान्याः तयोः मैत्रीं प्रशंसन्ति ।

मासानन्तरं सुदामा गृहं प्रत्यावर्तितुम् इच्छति । कृष्णस्य अनिच्छायामपि स हठं करोति, "सुशीला गृहे एकाकिनी वर्तते । सा मां प्रतीक्षमाणा अस्ति । अतः अधुना मया गन्तव्यं भवति ।" कृष्णः अपि "अस्तु तर्हि" इति कथयित्वा अनुमतिं प्रददाति । सुदामा प्रत्यावर्तते । कृष्णेन वियोगे ईषद्दुःखितः अपि स कृष्णेन मासं यावद् व्यतीतस्य कालस्य स्मरणेन हर्षितः सन् गृहं प्रति गच्छति । मासं यावत् सहोपवेशे सुदामा स्वदारिद्र्यं प्रदर्शयन् न तु किमपि याचते, न तु कृष्णः तस्यावस्थाम् अनुमाय किमपि ददाति । सुशीलाया अपेक्षां स्मृत्वा सुदामा ईषद्दुःखितस्तु भवति, परं कृष्णेन संयोगस्य हर्षातिरेकः तद्दुःखं सपदि विनाशयति ।

सुदामा गृहनिकटं प्राप्नोति । स्वस्य पर्णकुटीरस्य स्थाने स कृष्णस्य इव विशालं प्रासादं पश्यति । द्वारे कृष्णद्वारे एव वर्तमानाः द्वारपालाः सन्ति, ये पूर्वं सुदाम्नः उपहासं कृतवन्तः आसन् । अनेके जनाः तत्र इतस्ततः चलन्तः आसन् । सुदामा विस्मितः भवति । "कृष्णस्य प्रेम्णा अहं मार्गं विस्मृत्य पुनर्द्वारकाम् एव प्राप्तोऽस्मि किम् ?" इति विचार्य स यदा इतस्ततः पश्यति, तदा सुशीला "स्वामिन् ! आगच्छतु । गृहं प्रविशतु" इति कथयन्ती उपस्थिता भवति । सुशीलायाः वचनम् अभिज्ञाय सुदामा पृष्ठतः पश्यति । स वस्त्राभूषणैः अलङ्कृतां राजमहिषीम् इव सुशीलां पश्यति । हस्ते स्वर्णपात्रेषु पाद्यादिकं गृहीत्वा सुशीला उपस्थिता वर्तते । नेत्रे विश्वासं न कुरुतः । "स्वप्ने अस्मि किम् ?" इति विचार्य सुदामा आत्मानम् एव ताडयति । स जाग्रदवस्थाम् अनुभवति । हस्तसङ्केतेन "किमिदम् ?" इति सुशीलां पृच्छति । "भवत्प्रस्थानस्य दिनत्रयानन्तरं केचिद् भटाः अत्र आगच्छन् । ते अस्माकं पूर्वतनं गृहं विभिद्य एतस्य

प्रासादस्य निर्माणम् अकुर्वन् । अधुना अस्माकं गृहे सर्वाणि अपि सुखसाधनानि सन्ति । भृत्याः कार्यं कुर्वन्ति । गमनागमनयोः द्वारे द्वारपालाः नमन्ति । अनुमतिं विना कोऽपि अस्मद्गृहं प्रवेष्टुं न शक्नोति । अधुना तु प्रतिवेशिनः मया सह किमपि याचन्ते । अहं प्रसन्ना अस्मि । सर्वं कृष्णस्य प्रसादेन समभवत् । भो कृष्ण ! तुभ्यं भूरिशो धन्यवादाः" सुशीला हर्षातिरेकं प्रदर्शयति । "कृष्ण ! त्वया किमपि अप्रदाय अपि मह्यं सर्वं प्रदत्तम् । धन्योऽस्मि त्वादृशेन मित्रेण अहम् । मम कृते एतेषां सुखसाधनानां का आवश्यकता ? यस्य पार्श्वे स्मरणेनैव सुखप्रदं त्वादृशं मित्रं वर्तते । सर्वमपि नय, परं मम हृदि वर्तमानः त्वं मम हृदयं विहाय न गच्छ ।" इति कथयन् सुदामा अन्तः प्रविशति । सुशीला तमनुगच्छति । द्वारपालाः शिरोनमनेन सुदामानं प्रणमन्ति ।

कृष्ण र सुदामा असल मित्र थिए । गुरुको आश्रममा बसेर पढ्दा उनीहरू सधैँजस्तो सँगै हुन्थे । पढ्न, दाउरा खोज्न, गाई चराउन जाँदा कतै पनि उनीहरू छुटि्टँदैनथे । गुरु पनि उनीहरूको मित्रता देखेर दङ्ग पर्नुहुन्थ्यो र अरूलाई पनि उनीहरूकै जस्तो मित्रता गर्न प्रेरित गर्नुहुन्थ्यो । उनीहरूको मित्रता र पारस्परिक सहयोग भाव देखेर अरू साथीहरू पनि उनीहरूसँग मित्रता गर्न लालायित हुन्थे । उनीहरू पनि सबैलाई सहर्ष मित्र स्वीकार गर्दथे ।

समय बित्दै गयो । आश्रमको अध्ययन सकेर सबै छात्रहरू आआफ्ना कर्म क्षेत्रतर्फ लागे । कृष्ण र सुदामा पनि छुट्टिन विवश भए । उनीहरू मनमा नरामाइलो मान्दै आआफ्ना घरतर्फ लागे । समयले कसलाई पर्खन्छ र ? आआफ्नो कार्यव्यस्तताका कारण कृष्ण र सुदामाका बिचमा लामो समय भेटघाट भएन । यही कालखण्डमा यता कृष्ण द्वारका नामको एउटा सिङ्गै सहरका मालिक भएका थिए भने उता सुदामा दुर्भाग्यका कारण गरिबभन्दा गरिब बन्दै गइरहेका थिए । गरेका सबै कामहरू विफल भइदिनाले उनलाई दुई छाक टार्नसमेत हम्मे हम्मे परिरहेको थियो । आफ्ना प्रिय मित्र कृष्णको प्रगतिको समाचार सुनी उनी एकातिर हर्षविभोर हुन्थे भने अर्कातिर आफ्नो दुर्भाग्य देखेर अत्यन्त दुःखी पनि हुन्थे । उनी आफूले बाल्यकालमा कृष्णसँगै दाउरा खोज्न जाँदा वनमा गुरुआमाले दिएको चना कृष्णलाई नदिई एक्लै खाएको प्रसङ्ग सम्झिएर दुःखी हुन्थे र आफ्नो दरिद्रताको कारण पनि त्यसैलाई मान्थे । अपराधबोधले गर्दा उनी कृष्णका सामु मुख देखाउन पनि लाज मानी कृष्णलाई भेट्न जान सकेका थिएनन् । श्रीमती सुशीला कृष्णका सामु गएर सहयोग माग्न आग्रह गरिरहन्थिन् तर आफ्ना प्रिय मित्रका अगाडि यस्तो दीनहीन अवस्थामा जान र सहयोग माग्न उनी चाहँदैनथे । उनी भन्थे- 'माग्दा मित्रता दूषित हुन्छ ।' 'फेरि त्यस्ता ठुला व्यक्तिले मलाई नचिन्न पनि त सक्छन् । भेटघाट नभएको पनि धेरै भयो, यस्तो दीनहीन अवस्था देखेर उनले दया गर्नुको साटो अपमान गरे भने ?' कहिलेकाहीँ सुदामालाई यो चिन्ताले पनि सताउँथ्यो । अतः उनी कृष्णकहाँ जाने हिम्मत गर्दैनथे र 'आफ्नो बह, कसैलाई न कह' भनी चुप लागेर बसिरहन्थे ।

पत्नी सुशीलाको बारम्बारको आग्रहपछि उनी कृष्णलाई भेट्न जान तयार भए । धेरै समयपछि साथीसँग भेट गर्न जाने भएकाले उनी रित्तो हात जाने कुरा भएन । तर उनको घरमा कोसेली लान योग्य वस्तु केही पनि थिएन । छिमेकीकहाँबाट खोजखाज पारी सुशीलाले आधा माना चिउराको कनिका पोको पारिदिइन् । त्यही भए पनि लिएरै जानुपर्‍यो भनी पोको बोकेर सुदामा द्वारकातर्फ लागे । बाटामा कहिले उनी आफ्नो बालसखासँग भेटको कल्पना गरी पुलकित हुन्थे भने कहिले 'कृष्णले मलाई चिनेनन् वा अपमान गरे भने ?' भन्ने सोची त्रसित हुन्थे । यस्तो दोधारको अवस्थामा उनी द्वारका पुगे । द्वारपालहरूले भित्र जानबाट उनलाई रोके । उनले बालसखा सुदामा आएको कुरा कृष्णलाई जानकारी गराइदिन द्वारपाललाई आग्रह गरे । बारम्बारको आग्रहपछि एक जना द्वारपालले कृष्णसमक्ष त्यो खबर पुर्‍यायो । खबर सुन्नेबित्तिकै अत्यन्त हर्षित हुँदै कृष्ण मूल ढोकासम्म आइपुगे र आफ्ना बालसखालाई अङ्कमाल गरी हर्षाश्रुधारा बगाउन थाले । अङ्कमालद्वारा नै लामो समय प्रेम साटासाट गरिसकेपछि कृष्णले सुदामालाई ससम्मान भित्र लगे, आफू सुत्ने खाटमा नै बसाए र अत्यन्त आदरका साथ अतिथि सत्कार गरे ।

सुदामाले सङ्कोचका कारण आफूले लगेको कोसेली कनिका दिन सकेका थिएनन्, कृष्णले आफैँ खोजखाज पारी मित्रले ल्याएको कोसेली काँचो चामलको कनिका नै भए पनि प्रेमपूर्वक मीठो मानेर खाए । कुराकानीको सन्दर्भ चल्दै जाँदा सुदामाले जति नै लुकाउन खोजे पनि उनको दुःखको कथा कृष्णका अगाडि छरपस्ट भयो । तर कृष्णले थाहै नपाएजस्तो गरी मित्रको आतिथ्यमा ध्यान दिए । कृष्णको आग्रहमा सुदामा एक महिनाजति त्यहाँ बसे । उनी त्यहाँ बसुन्जेल कृष्णले कहिल्यै उनको साथ छोडेनन् । उनीहरूको मित्रता देखी सबै द्वारकावासी अचम्ममा परे ।

एक महिनापछि सुदामा फर्किए । उनी रित्तो हात थिए तैपनि खुसी थिए । मित्रका साथ एक महिनाको बसाइले उनमा छुट्टै फुर्तीको सृजना गरेको थियो । मित्रको समुन्नतिले नै उनी पुलकित थिए । आफूमा अपराधबोध भएको प्रसङ्गका लागि पनि उनले माफी मागिसकेका थिए । सुशीलाको दुःख र अपेक्षा सम्झिएर बेलाबेलामा उत्पन्न हुने दुःखलाई पनि कृष्णस्मरणको सुखले तुरुन्तै हटाइदिन्थ्यो । सुदामा घर पुगे तर घर भएको ठाउँमा घर थिएन, कृष्णकै जस्तो दरबार थियो । कृष्णकै ढोकाका द्वारपाल त्यहाँ उपस्थित थिए । छक्क परेका सुदामालाई सिँगारिएकी सुशीलाले आई कृष्णका सेना आई दरबार तयार गरिदिएको र नोकरचाकरको समेत व्यवस्था गरिदिएको प्रसङ्ग सुनाइन् । सुदामामा ती सुखसाधनप्रति खासै मोह थिएन तर सुशीलाको खुसीले उनी प्रसन्न भए । कृष्णलाई धन्यवाद दिँदै ती दम्पती घरभित्र छिरे । कृष्णको द्वारमा सुदामाको दरिद्रतामाथि उपहास गर्ने द्वारपालले शिर झुकाएर उनलाई अभिवादन गरे ।

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| सौदायिकम् | दायवस्तु | कोसेली | Present |
| नितराम् | नित्यम् | सधैँ | Always |
| मोमुद्यते | अत्यन्तं प्रसीदति | एकदम खुसी हुन्छ | Very happy |
| आदिनम् | दिनं यावत् | दिनभरि | Whole day |
| आरात्रि | रात्रिं यावत् | रातभरि | Overnight |
| स्वान्तम् | मानसम् | मनका कुरा | Desire |
| प्रपूर्य | पूरयित्वा | पूरा गरेर | By completing |
| कुर्वाणः | कुर्वन् | गर्दै | Doing |
| विदधानः | कुर्वन् | गर्दै | Doing |
| चणकः | हरिमन्थकः | चना | Gram |
| रिक्तपाणिः | शून्यहस्तः | रित्तो हात भएको | Empty handed |
| स्वपितुम् | शयितुम् | सुत्न | To sleep |
| चिपिटम् | पृथुकम् | चिउरा | Beaten paddy |
| कणिका | कणः | कनिका | Broken |
| द्वन्द्वम् | युद्धम् | झगडा | Conflict |
| धावं धावम् | धावित्वा धावित्वा | दौडी दौडी | Running fast |
| आघट्टितः | कृताघट्टनः | ठोक्किएको | Crashed |
| स्मारं स्मारम् | स्मृत्वा स्मृत्वा | सम्झी सम्झी | Remember again and again |

| | | | |
|---|---|---|---|
| प्रमृज्य | प्रोञ्छ्य | पुछेर | After cleaning |
| कृतकृत्यः | कृतार्थः | कृतार्थ | Success |
| पोटलिका | लघु पोटलकम् | सानो पोका | Small package |
| अनुमाय | अनुमानं कृत्वा | अनुमान गरेर | By guessing |
| हर्षातिरेकः | अतिशयप्रसन्नता | अत्यन्त खुसीपन | Extreme happiness |
| सपदि | सद्यः | तुरुन्त | Immediately |
| अभिज्ञाय | परिचित्य | चिनेर | After acquaintance |
| प्रवेष्टुम् | प्रवेशं कर्तुम् | पस्न | To enter |

## अभ्यासः

### श्रवणं भाषणं च

१. **मित्रस्य उच्चारणं श्रुत्वा स्वयमुच्चारयत**

अनुरुणद्धि, सुदृढायते, षड्विधम्, कियद्दुःखितः, बुभुक्षावशात्, सौदायिकस्य, उत्कण्ठितः, प्रतीक्षमाणः, हर्षातिरेकेण, भ्रातृजायया, मासानन्तरम्, पर्णकुटीरस्य, अस्मद्गृहम् ।

२. **शिक्षकस्य साहाय्येन शुद्धमुच्चारयत**

एतावद्वर्षानन्तरम्, स्मरणमात्रेण, सुदामकृष्णयोः, दैनिकव्यवहारसञ्चालने, धौताग्रभागः, हर्षाश्रुपूरितनयनः, कुर्वाणाः, भवत्प्रस्थानस्य ।

३. **पाठस्य तृतीयानुच्छेदं शिक्षकात् श्रुत्वा प्रश्नानुत्तरयत**

(क) सुशीला किं श्रुत्वा द्रवीभवति ?

(ख) का कृष्णस्य पार्श्वे गत्वा याचनार्थमनुरुणद्धि ?

(ग) कः द्वारकाधीशो वर्तते ?

(घ) किं मित्रतायाः दूषणमस्ति ?

(ङ) सुदामा किं कर्तुं नेच्छति ?

४. **पाठस्य कथां सङ्क्षिप्य स्वभाषया श्रावयत ।**

५. **पाठस्य सप्तमानुच्छेदं श्रुत्वा अधस्तने प्रश्नद्वये स्वविचारं प्रकटयत**

(क) त्रुटिर्जायते चेत् क्षमायाचनम् उचितमस्ति उत केवलं मनसि एव ग्लान्यनुभूतिः उचितास्ति ? सतर्कं कथयत ।

(ख) 'सौदायिकं नास्ति अतो रिक्तपाणिः मित्रस्य पार्श्वे कथं गच्छानि ?' इति सुदाम्नो विचारे युष्माकं समर्थनमस्ति न वा ? सकारणं निरूपयत ।

६. **अधस्तनस्य पद्यस्य आशयं शिक्षकात् श्रुत्वा मित्रतायाः स्वरूपं निरूपयत**

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥

७. **पाठस्य द्वादशमनुच्छेदं श्रुत्वा अधस्तनवाक्यानां सत्यासत्यविवेकं कुरुत**

(क) सुदामा मासं यावद् द्वारकायां तिष्ठति ।

(ख) सुदामानं द्वारकायां परित्यज्य कृष्णः कार्यार्थम् अन्यत्र गच्छति ।

(ग) सुदामा कृष्णस्य अग्रे दारिद्र्यं प्रकटयति ।

(घ) कृष्णः सुदाम्नः प्रसन्नतायै सर्वथा प्रयतते ।

(ङ) सुदामकृष्णयोः आदर्शमैत्रीं दृष्ट्वा द्वारकावासिनः सर्वे रोषान्विता भवन्ति ।

८. **युष्माभिः अपि क्वचित् पुराणकथाः श्रुताः स्युः । श्रुतासु पुराणकथासु काञ्चित् प्रेरणादायि कथां कक्षायां श्रावयत ।**

९. **शिक्षकात् प्रदत्तानुच्छेदं श्रुत्वा पृष्टानां प्रश्नानामुत्तराणि कथयत**



भक्तिः प्रेम एव अस्ति परं पत्यौ, पत्न्याम्, पुत्रादिषु च यत् प्रेम भवति तद् भक्तिपदेन नाभिधीयते । 'पूज्येष्वनुरागो भक्तिः' इति शब्दकल्पद्रुमस्य निर्देशात् मातृ-पितृ-गुरु-राष्ट्र-ईश्वरादीन् पूज्यान् प्रति प्रेम एव भक्तिः कथ्यते । श्रद्धया आदरेण च युतं प्रेम भक्तिः अस्ति । अन्येषु प्रेम सापेक्षं भवति, अतः कदाचित् प्रेम्णि प्रेमविषये च सन्देहोऽपि भवितुं शक्नोति परं निरपेक्षत्वाद् भक्तिरूपं प्रेम दृढं भवति । यस्मिन् भक्तिः जायते, तस्मिन् न कदापि सन्देह उत्पद्यते । भक्त्या औपम्यम् अन्येन प्रेम्णा भवितुं न शक्नोति । अतो भक्तिः परमं प्रेम अस्ति । श्रवणकुमार-राम-परशुरामादीनां मातृपितृभक्तिः, आरुणि-धौम्यादीनां गुरुभक्तिः, पृथ्वीनारायणादीनां राष्ट्रभक्तिः, ध्रुव-प्रह्लाद-नारद-शबरी-मीरा-अम्बरीषादीनाम् ईश्वरभक्तिश्चैताः उदाहरणीयाः भक्तयः सन्ति । भक्तौ दृढाः जनाः स्वार्थं विहाय केवलं स्वकर्मणि दत्तावधाना भवन्ति । दृढया इच्छाशक्त्या भक्तिद्वारा कठिनमपि कार्यं साधयितुं पार्यते इति उपर्युक्तैः उदाहरणैः ज्ञातुं शक्यते ।

भक्ति प्रेम हो तर पति, पत्नी, सन्तान आदिमा गरिने प्रेम भक्ति होइन । शब्दकल्पद्रुमले बताएअनुसार माता, पिता, गुरु, राष्ट्र र ईश्वर आदि पूज्यहरूमा गरिने श्रद्धा र आदरसहितको प्रेम नै भक्ति हो । सापेक्षताका कारण अरूको प्रेममा कहिलेकाहिँ शङ्का उत्पन्न हुन सक्छ तर भक्तिरूप निरपेक्ष प्रेम दृढ र निःसन्देह हुन्छ । भक्तिको तुलना कुनै प्रेमसँग गर्न सकिँदैन तसर्थ भक्ति सर्वोच्च प्रेम हो । श्रवणकुमार, राम, परशुराम आदिको मातृपितृभक्ति, आरुणि, धौम्य आदिको गुरुभक्ति, पृथ्वीनारायण आदिको राष्ट्रभक्ति, ध्रुव, नारद, प्रह्लाद, शबरी, मीरा, अम्बरीष आदिको ईश्वरभक्ति उदाहरणीय छन् । भक्तिमा दृढहरू सावधानीपूर्वक आफ्नो कर्म गर्दछन् । इच्छाशक्तिको दृढताद्वारा भक्तिले कठिन कार्यलाई पनि सिद्ध गर्दछ ।

(क) कीदृशं प्रेम भक्तिपदेन नाभिधीयते ?

(ख) 'पूज्येष्वनुरागो भक्तिः' इति शब्दकल्पद्रुमस्य निर्देशात् कीदृशं प्रेम भक्तिः कथ्यते ?

(ग) अन्यत्प्रेमापेक्षया भक्तिरूपं प्रेम किमर्थं दृढा भवति ?

(घ) कुत्र कदापि सन्देहो नोत्पद्यते ?

(ङ) किमर्थं भक्तिः परमं प्रेम अस्ति ?

(च) केषां मातृपितृभक्तिः उदाहरणीया अस्ति ?

(छ) ईश्वरभक्तौ के प्रसिद्धाः सन्ति ?

(ज) कया भक्तिद्वारा कठिनमपि कार्यं साधयितुं पार्यते ?

(झ) 'पत्यौ' 'प्रेम्णा' इत्यनयोः प्रातिपदिक-विभक्ति-वचननिर्देशं कुरुत ।

(ञ) 'पूज्येष्वनुरागः' 'ईश्वरभक्तिश्चैताः' इत्यनयोः सन्धिविच्छेदं कुरुत ।

(ट) अनुच्छेदे प्रयुक्तानि प्रेमपदस्य त्रीणि विशेषणपदानि अन्विष्य कथयत ।

(ठ) अनुच्छेदात् तुमुन्प्रत्ययान्ते द्वे पदे कथयत ।

(ड) किं भक्तिः प्रेष्यभावो वर्तते ? स्वमतं प्रकटयत ।

१०. **पाठस्य त्रयोदशमनुच्छेदं श्रुत्वा अधस्तनानां पदानां प्रसङ्गानुकूलमर्थं श्रावयत**

प्रत्यावर्तितुम्, हठम्, एकाकिनी, प्रतीक्षमाणा, अधुना, ईषद्दुःखितः, सहोपवेशे, याचते, अनुमाय, हर्षातिरेकः, सपदि ।

११. **कथायाः सन्देशं स्वशब्दैः कथयत ।**

१२. **अधस्तानानां पदानां प्रयोगेण प्रतिपदं पाठातिरिक्तमेकं वाक्यं कथयत**

गन्तुम्, व्याकुलम्, कथञ्चिद्, मनसि, कारणेन, क्षुधया, एव, जायन्ते, केचित्, शिरसि, इव, सर्वथा, कथयित्वा, विहाय ।

१३. **श्रवणपाठं श्रुत्वा कालिञ्चोकस्थानस्य विषये स्वभाषया एकम् अनुच्छेदं लिखत ।**

## पठनम्

१. **शिक्षकसाहाय्येन पाठादौ वर्तमानं श्लोकं सलयं वाचयत ।**

२. **पाठस्य कथायाः अनुच्छेदानां क्रमेण सस्वरवाचनं कुरुत ।**

३. **पाठस्य दशमानुच्छेदस्य द्रुतपठनं कुरुत ।**

४. **पाठस्य द्वितीयानुच्छेदं पठित्वा रिक्तस्थानं पूरयत**

(क) ………… ईषद् रोषं प्रकटयति ।

(ख) ……….. बाल्यकालिकः प्रियतमः सखा अस्ति ।

(ग) सुदाम्ना कृष्णेन सह व्यतीतः कालः तस्य जीवनस्य ………. अस्ति ।

(घ) कृष्णः अपि सुदाम्नः सामीप्यं ……….. इच्छति स्म ।

(ङ) सुदामा ……… एव चित्ते धृत्वा दिनानि यापयन् अस्ति ।

५. **कथां सम्यक् पठित्वा अधस्तनानां घटनानां क्रमनिर्धारणं कुरुत**

( ) कृष्णेन मेलनाय सुदामानं प्रति सुशीलायाः अनुरोधः

( ) सुदाम्नो द्वारकागमनम्

( ) सुदाम्नो गृहस्य प्रासादरूपे परिवर्तनम्

( ) कृष्णस्य द्वारकाधीशत्वम्

( ) कृष्णेन चिपिटकणिकाभक्षणम्

( ) एकाकिना सुदाम्ना चणकभक्षणम्

( ) द्वारपालैः सुदाम्नोऽवमानम्

( ) सुशीलया सुदाम्ने चिपिटकणिकाप्रदानम्

( ) कृष्णस्य मित्रसत्कारः

( ) सुदामकृष्णयोः मेलनम्

६. **प्रदत्तमनुच्छेदं पठित्वा सुदाम्नो मनोद्वन्द्वस्य चित्रणं कुरुत**

कृष्णेन मेलनाय गच्छतः सुदाम्नो मनसि विचाराणां द्वन्द्वं जायते । स चिन्तयति, "अद्य कृष्णेन सह मम मेलनं भविष्यति । गुरुकुले व्यतीतानां कालानाम् अद्य पुनरावृत्तिः भविष्यति । अहं तु अतीव प्रसन्नः अस्मि । कृष्णः मां दृष्ट्वा कियत्प्रसन्नो भवेत् ? अधुना तु स द्वारकाधीशो वर्तते । संसारस्य सर्वेऽपि राजानः तद्वशगाः सन्ति । अधुना तस्य पार्श्वे मम कृते समयः अस्ति न वा ? स मां स्मरति उत न स्मरति ? यदि स माम् अस्मरिष्यत्, तर्हि मम अन्वेषणम् अकरिष्यत् । स तु समर्थो वर्तते । मम अन्वेषणमेव तेन विहितं नास्ति । अहम् एतावत्प्रसन्नः सन् कृष्णेन सह मेलितुं गच्छन् अस्मि, कृष्णः मां न परिचेष्यति उत मम दारिद्र्यं दृष्ट्वा अपमानं करिष्यति चेद् अहं किं कुर्याम् ?" सुदामा मार्गाद् एव प्रत्यावर्तितुम् इच्छति । कृष्णस्य मैत्रीयुतं व्यवहारं स्मारं

स्मारं सुदामा कृष्णे दृढः सन् पुनः विचारयति, "न, अहम् असमीचीनं विचारयन् अस्मि । मम प्रियसखः कृष्णः तादृशो नास्ति । स कदापि मां न विस्मरति । स त्रिलोकाधिपः सन्नपि मम मैत्र्या अवमानं न करिष्यति । स मित्रतायाः महत्त्वं जानाति ।" सः अग्रे गच्छति ।

७. **कथायाः अन्तिमानुच्छेदस्य मौनपठनं विधाय अधस्तनानां प्रश्नानाम् उत्तराणि दत्त**

**(क) अतिसङ्क्षेपेण उत्तरयत**

(अ) सुदामा स्वस्य पर्णकुटीरस्य स्थाने किं पश्यति ?

(आ) सुशीला कथमुपस्थिता भवति ?

(इ) हस्तताडनेन सुदामा कामवस्थाम् अनुभवति ?

(ई) कस्य प्रसादेन सुशीलायाः जीवने सुखं समभवत् ?

(उ) द्वारपालाः कथं सुदामानं प्रणमन्ति ?

**(ख) सङ्क्षेपेण उत्तरयत**

(अ) किमर्थं सुशीला प्रसन्ना अस्ति ?

(आ) सुदामा सुखसाधनानाम् आवश्यकत्वं न पश्यति ?

**(ग) भाषिककार्यं कुरुत**

(अ) 'सुदाम्नः' 'प्रेम्णा' 'मह्यम्' इत्येषां प्रातिपदिकविभक्तिवचनानि निर्दिशत ।

(आ) 'अभिज्ञाय' 'विभिद्य' 'विहाय' इत्येतानि पदानि अर्थापयत ।

(इ) 'प्रासादम्' 'सुखसाधनानि' 'मित्रेण' इत्येषां विशेष्यपदानां विशेषणपदानि अन्विष्य निर्दिशत ।

(ई) 'अकुर्वन्' 'याचन्ते' 'नय' इत्येषां क्रियापदानां धातुलकारपुरुषवचनानि निर्दिशत ।

(उ) 'कृष्णस्य इव' 'प्रसन्ना अस्मि' 'वर्तमानः त्वम्' इत्येषां सन्धिं कुरुत ।

(ऊ) 'इतस्ततः' 'वस्त्राभूषणैः' 'धन्योऽस्मि' इत्येषां सन्धिविच्छेदं कुरुत ।

८. **पाठस्य चतुर्थमनुच्छेदं पठित्वा सुशीलायाः तादृश्याम् अवस्थायां सुदाम्नो विचारः उपयुक्तो वर्तते न वा ? विमृशत ।**

९. **पाठस्य षष्ठमनुच्छेदं पठित्वा तत्सारांशं स्वभाषाया कथयत ।**

१०. **अधस्तनं श्लोकं पठित्वा मित्रतायाः दूषकतत्त्वानां विमर्शं कुरुत**

रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता ।
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥

११. **प्रदत्तं पुराणपरिचयं पठित्वा प्रदत्तकार्याणि कुरुत**

'पुरा भवम्' इत्यर्थे पुराशब्दात् ट्युप्रत्ययविधानेन पुराणशब्दो जायते । पुराणशब्देन प्राचीनो वृत्तान्तः बोध्यते । केचन 'पुरा अपि नवम्' इति पुराणशब्दस्यार्थं कुर्वन्ति । अतः प्राचीनास्ते

वृत्तान्ताः पुराणपदेन अभिधीयन्ते, ये सर्वदा नवीनतया अनुभूयन्ते । शब्दकल्पद्रुमः व्यासप्रणीतं वेदार्थवर्णितं पञ्चलक्षणान्वितं शास्त्रं पुराणं मनुते । पञ्च लक्षणानि च इमानि सन्ति-

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।

वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

पुराणेषु व्यासेन वेदार्थस्य एव वर्णनं कृतम् अस्ति । तेन पुराणानि पञ्चमवेदत्वेन व्यवह्रियन्ते । यदा वेदार्थग्रहणे लोकानां बुद्धिः असमर्था, तदा वेदार्थस्य विवरणरूपेण दृष्टान्ताद्यलङ्कारसहितानि पुराणानि विरचितानीति विद्वांसः कथयन्ति । समाजस्य तात्कालिकस्वरूपबोधनाय पुराणानां महानुपयोगो भवति । पुराणेषु इतिहासो निहितो वर्तते । पुराणोक्तानामितिवृत्तानां प्रामाणिकत्वं शिलालेखादिभिरपि कुर्वन्तः सन्ति अधुना विद्वांसः । अतो पाश्चात्त्या अपि विद्वांसः पुराणेषु अधुना आदरं कुर्वन्ति । इतिहासा राज्ञां वृत्तं प्राधान्येन बोधयन्ति चेत् पुराणानि राज्ञां वृत्तैः सह ऋषीणां वृत्तमपि बोधयन्ति । पुराणानि भौगोलिकसामग्रीमपि प्रस्तुवन्ति । काशीखण्डे काशीपुर्यास्तादृशं विस्तृतं वर्णनं विद्यते येन काशी तस्या मानचित्रमिव पाठकानां पुरत उपतिष्ठते । अन्येष्वपि पुराणेषु तेषां तेषां तीर्थानां तादृशं स्पष्टं वर्णनमुपलभ्यते, येन तत्परिचये सौकर्यं भवति । एवं पुराणानि अनेकधा उपयोगीनि सन्ति ।

संस्कृतवाङ्मये अष्टादश पुराणानि सन्ति । तेषां नामनिर्देशकः अयं श्लोकः प्रसिद्धः अस्ति-

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।

अनापलिङ्गकूस्कानि पुराणानि विदुर्बुधाः ॥

मत्स्यपुराणम्, मार्कण्डेयपुराणम्, भागवतपुराणम्, भविष्यपुराणम्, ब्रह्मपुराणम्, ब्रह्माण्डपुराणम्, ब्रह्मवैवर्तपुराणम्, विष्णुपुराणम्, वामनपुराणम्, वराहपुराणम्, वायुपुराणम्, अग्निपुराणम्, नारदपुराणम्, पद्मपुराणम्, लिङ्गपुराणम्, गरुडपुराणम्, कूर्मपुराणम्, स्कन्दपुराणम् इति अष्टादश पुराणानि सन्ति । उपपुराणानि अपि अष्टादश एव सन्ति ।

कोश आदिका अनुसार व्यासद्वारा प्रणीत वृत्तान्त पुराण हो, यसले जति पटक सुन्दा वा पढ्दा पनि नवीनताको स्वाद चखाउँछ । सर्ग, प्रतिसर्ग, वंश, मन्वन्तर र वंशानुचरित गरी पुराणका पाँच लक्षण छन् । साधारण मानवमस्तिष्कले वेदार्थको ग्रहण गर्न नसक्ने भएका कारण साधारण मानवका लागि बोध्य बनाउन वेदार्थकै प्रतिपादन प्रायः कथाशैलीमा गरी पुराणको रचना गरिएकाले पुराणलाई पाँचौँ वेद पनि भनिन्छ । इतिहास, भूगोल र समाजको तात्कालिक अवस्था बुझ्नका लागि पुराणहरू अत्यन्त उपयोगी हुन्छन् । विभिन्न ऋषिमुनि, विशिष्ट राजाहरू, विशेष तीर्थस्थलको वर्णन पुराणहरूमा पाइन्छ । त्यसकारण पुराणहरू अनेक प्रकारले उपयोगी छन् । संस्कृत वाङ्मयमा अठार पुराणहरू रहेका छन् । उपपुराणको सङ्ख्या पनि अठार नै रहेको छ ।

**(क) रिक्तस्थानं पूरयत**

(अ) पुराशब्दे ....... प्रत्ययविधानेन पुराणशब्दो जायते ।

(आ) पुराणानां रचयिता ........ अस्ति ।

(इ) ........... पञ्चमवेदनाम्ना अपि परिचीयन्ते ।

(ई) पुराणानि राज्ञां वृत्तैः सह ........... वृत्तमपि बोधयन्ति ।

(उ) पुराणानां सङ्ख्या ......... अस्ति ।

**(ख) सङ्क्षेपेण उत्तरयत**

(अ) के पुराणपदेन अभिधीयन्ते ?

(आ) पुराणस्य पञ्च लक्षणानि कानि ?

(इ) अधुना पाश्चात्याः किमर्थं पुराणेषु आदरं कुर्वन्ति ?

(ई) पुराणानि कथमुपयोगीनि सन्ति ?

**(ग) पुराणनामनिर्देशकं प्रदत्तं श्लोकमाधृत्य अधस्तनीं सारिणीं पूरयत**

| श्लोकांशः | पुराणनामानि |
|---|---|
| मद्वयम् | १. मत्स्यपुराणम् |
| | २. ................. |
| भद्वयम् | १. ................. |
| | २. ................. |
| ब्रत्रयम् | १. ................. |
| | २. ................. |
| | ३. ................. |
| वचतुष्टयम् | १. ................. |
| | २. ................. |
| | ३. ................. |
| | ४. ................. |
| अनापलिङ्गकूस्कानि | १. ................. |
| | २. ................. |
| | ३. ................. |
| | ४. ................. |
| | ५. ................. |
| | ६. ................. |
| | ७. ................. |
| समग्रसङ्ख्या | ................... |

## लेखनम्

१. **अधस्तनानि पदानि शुद्धतया अभ्यासपुस्तिकायां लिखत**

जीर्णवस्त्रः, मोमुद्यते, द्वारकाधीशः, सामर्थ्यम्, आदर्शव्यवहारम्, विस्मृतवान्, समृद्धया, आघट्टितः, द्वारान्तःप्रविष्टः, कृतकृत्यः, दुःखनिवारणम्, ईषद्दुःखितः, जाग्रदवस्थाम्, उत्पद्यते, आर्द्रयति, प्रत्यावर्तते, स्वदारिद्र्यम् ।

२. **अधस्तनेभ्यः पदेभ्यः अशुद्धीः निराकृत्य शुद्धानि पदानि लिखत**

रीक्तपानिः, प्रतिग्रिह्णनी, भबत्साहाइयम्, दृढिकूर्वन्ती, एतावद्वर्शानि, प्रवेसानुमतीम्, अभुतपुर्वाम्, कूषलप्रश्नस्य, ईतस्तत, सोकान्वीतः, ऊत्साहशक्तीः, चीपिटकनिकाः, शिरसन्चालनेन ।

३. **पाठानुकूलमर्थं लिखत**

जीर्णवस्त्रः, अदृष्ट्वा, आदिनम्, मत्तः, प्रत्यावर्तने, प्रतिवेशिनाम्, विधातुम्, स्वपितु, पोटलिका, अवमानेन, उत्कण्ठितः, विस्मिता, प्रमृज्य, आच्छिद्य, राजमहिषीम्, अप्रदाय ।

४. **प्रतिपदं सार्थकं वाक्यमेकं रचयत**

सौदायिकम्, करिष्यति, सन्तुष्टये, दर्शयानि, क्षुधया, प्रफुल्लम्, प्रासादम्, धावं धावम्, वक्षसि, सर्वथा, इतस्ततः, भटाः, प्रवेष्टुम्, नय, विदधानः ।

५. **पाठस्य पञ्चमानुच्छेदस्य श्रुतलेखनं कुरुत ।**

६. **पाठस्य दशमैकादशानुच्छेदौ आधृत्य सुदामकृष्णयोः मैत्रीं वर्णयत ।**

७. **कस्य कथनम् अस्ति ? लिखत**

(क) कदा गमिष्यति भवान् ?

(ख) याचनं मित्रतायाः दूषणम् अस्ति ।

(ग) धनाशया अहं कृष्णसमीपं न गच्छामि ।

(घ) अहम् अपराधी अस्मि ।

(ङ) भवान् क्षमायाचनं विधातुं शक्नोति ।

(च) श्वः प्रातः भवता गन्तव्यमस्ति ।

(छ) द्वारे कश्चिद् दरिद्रः आगत्य आत्मानं भवन्मित्रं कथयति ।

(ज) एतावद्वर्षानन्तरं त्वं मित्रम् अस्मरः

(झ) मित्र ! अन्तः प्रविश ।

(ञ) सा मां प्रतीक्षमाणा अस्ति ।

(ट) स्वामिन् ! आगच्छतु । गृहं प्रविशतु ।

(ठ) त्वं मम हृदयं विहाय न गच्छ ।

**८. अधस्तनं श्लोकद्वयमाधृत्य सन्मित्रस्य परिचयं लिखत**

| | |
|---|---|
| स्वभावजं तु यन्मित्रं भाग्येनैवाभिजायते ।<br>तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ | जो स्वाभाविक मित्र हुन्छन्, तिनीहरूको प्राप्ति भाग्यले मात्र हुन्छ । उनीहरूको मित्रतामा कृत्रिमता हुँदैन, त्यसैले त्यस्ता मित्रहरूले जस्तोसुकै विपत्तिमा पनि साथ छोड्दैनन् । |
| शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम् ।<br>केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ | शोक, रोग र डरबाट रक्षा गर्ने एवं प्रेम र विश्वासको पात्रस्वरूप 'मित्र' भन्ने दुई अक्षरको रत्न कसले सृष्टि गऱ्यो । |

**९. पाठारम्भे वर्तमानस्य श्लोकस्य भावार्थं पठित्वा सन्मित्र-दुर्मित्रयोः पार्थक्यं प्रदर्शयत ।**

**१०. अतिसङ्क्षेपेण उत्तरं दत्त**

(क) का ईषद् रोषं प्रकटयति ?

(ख) सुदामा कां कथञ्चिदपि दूषितां कर्तु नेच्छति ?

(ग) किं परमं दुःखमस्ति ?

(घ) सुदामा कां घटनां स्मृत्वा ग्लानिम् अनुभवति ?

(ङ) कृष्णः कथं सुदाम्नो वस्त्राणि आर्द्रयति ?

(च) सुदामा सौदायिकरूपेण किं नीतवान् आसीत् ?

(छ) किं कृष्णः सुशीलाया अवस्थास्मरणेन सुदाम्नो मनसि जातं दुःखं विनाशयति ?

(ज) के सुदाम्नः पूर्वतनं गृहं विभिद्य प्रासादस्य निर्माणम् अकुर्वन् ?

(झ) द्वारपालाः कथं सुदामानं प्रणमन्ति ?

**११. पाठमाधृत्य रिक्तस्थानं पूरयत**

(क) सुदामा ............. चित्ते धृत्वा दिनानि यापयन् अस्ति ।

(ख) सुशीला ............. अग्रे गन्तुम् अपि लज्जाम् अनुभवति ।

(ग) कृष्णमेलनगमने सुदामा जीर्णेऽपि शरीरे .......... अनुभवति ।

(घ) सुदामा कृष्णस्य .......... सन्तुष्टो भवति ।

(ङ) कृष्णस्य निर्देशानुसारेण ............ सुदामानं प्रणमति ।

(च) कृष्णः सुदाम्नः ......... सर्वथा प्रयतते ।

(छ) सुशीला हस्ते ......... पाद्यादिकं गृहीत्वा सुदाम्नः अग्रे उपस्थिता वर्तते ।

**१२. सङ्क्षेपेण उत्तरयत**

(क) सुदामा कृष्णस्य मैत्रीं कथं स्मरति ?

(ख) आशा किमर्थं परमं दुःखं कथ्यते ?

(ग) मैत्रीमाधृत्य कृष्णः कीदृशः अस्ति ?

(घ) सुदाम्नः चारित्रिकं वैशिष्ट्यं किम् ?

(ङ) कथामाधृत्य सुशीलायाः चरित्रचित्रणं कुरुत ।

**१३. आदर्शमैत्री कीदृशी भवेत् ? कथामाधृत्य वर्णयत ।**

**१४. अधस्तनं सुदामकृष्णयोः प्रेमालापसंवादं सामान्यानुच्छेदे परिवर्त्य लिखत**

(भोजनानन्तरं कृष्णस्य शयनागारे पर्यङ्के सुदामा उपविष्टो वर्तते । अधः सुदाम्नः पादसमीपे भूमौकृष्णः उपविष्टः अस्ति । बहुकालानन्तरं मिलितौ तौ परस्परम् इत्थं वार्तालापं कुरुतः ।)

कृष्णः- मित्र ! एतावता कालेन माम् अस्मरः ? इतः पूर्वं तव स्मृतौ मम स्थानं नासीत् किम् ?

सुदामा - न मित्र ! त्वं कथं विस्मर्तुं शक्यः असि ? सर्वदा त्वं मम स्मृतौ एव वर्तसे । गुरुकुलजीवनाद् अनन्तरं मम जीवनं तव स्मृत्या एव चलद् अस्ति । त्वया तु अहं विस्मृतः स्याम् ?

कृष्णः - मित्र ! किं कथयसि ? पुष्पं सुगन्धं विस्मरति किम् ? दीपः प्रकाशं विस्मरति किम् ? नदी जलं विस्मरति किम् ? त्वं तु मम प्राणः असि । जीवः प्राणान् विस्मरति किम् ?

सुदामा - एवं चेद् मम अन्वेषणं त्वया किमर्थं न विहितम् ?

कृष्णः - त्वं कुत्र निवससि ? इति ज्ञानं विना अहं कथं तवान्वेषणं विदधामि ? त्वं तु पूर्वतनं स्थानं परित्यक्तवान् असि । परं मम स्थानं तु त्वं ज्ञातवान् स्याः तर्हि किमर्थम् एतावद्वर्षाणि यावद् मेलनाय नागच्छः ?

सुदामा - तव स्थानं तु ज्ञातवान् आसम् परं कदाचित् कृतेन अपराधेन तव अग्रे उपस्थातुं मयि उत्साह एव न समुत्पन्नः ।

कृष्णः - कोऽपराधः ?

सुदामा - आवां समिदन्वेषणक्रमे वने आस्व । वर्षाः जायमाना आसन् । वृक्षस्य एकस्यां शाखायाम् अहम् आसम्, अपरस्यां त्वम् आसीः । गुरुमात्रा प्रदत्ताः चणकाः मम पार्श्वे आसन् । 'चणकाः भूमौ पतिताः' इति त्वाम् असत्यं कथयित्वा अहम् एकाकी चणकान् अभक्षयम् । तदा त्वम् अपि क्षुधया पीडितः स्याः । मम मनसि तदा किमर्थं लोभः समुत्पन्नः ? 'लोभः पापस्य कारणम्' इति समीचीनमेव कथितमस्ति नीतौ । मित्र ! अहम् अपराधी अस्मि । क्षमां कुरु ।

कृष्णः - मित्र ! तस्मिन् काले त्वम् एकाकी चणकभक्षणं कृतवान् आसीः इति अहं जानामि स्म । परं मया तु तत् सर्वं विस्मृतम् आसीत् । बाल्ये स्वभावस्य चाञ्चल्यवशात् कृतेन कर्मणा

अपि त्वम् आत्मानम् अपराधिनं कथयसि । क्षमां च याचसे । मित्रेण सह क्षमायाचनम् ? एतद् उचितं नास्ति । (सुदामा महद्भारं परित्यक्त इव दीर्घं निःश्वसति ।)

सुदामा - 'धन्यवादः मित्र ! क्षान्तोऽहम् । मम मनसि अयं विषयो भारायितः आसीत् । सुशीले ! त्वं धन्या असि । तव कथनेन एव अद्य अहं मत्प्रियसखस्य पार्श्वे अस्मि । अद्य मम मनसो भारश्च अपगतः अस्ति ।

कृष्णः - कासौ सुशीला ?

सुदामा - मम पत्नी ।

कृष्णः - एवम् ! विवाहोऽपि कृतः त्वया ? भ्रातृजाया मम कृते किं प्रेषितवती अस्ति ? मह्यं प्रयच्छ । (सुदामा द्वारकाधीशस्य प्रासादे चिपिटकणिकाः प्रदर्शयितुं लज्जाम् अनुभवति । स पोटलिकां कक्षे गोपायति)

सुदामा - नास्ति किमपि ।

(कृष्णः सुदाम्नो भावं बुध्यते)

कृष्णः - भ्रातृजाया मम कृते किमपि न प्रेषितवती इति तु न सम्भवति । त्वं मिथ्यावादी वर्तसे ।

(कृष्णः सुदाम्नः कक्षतः पोटलिकाम् आच्छिद्य चिपिटकणिकाः भक्षयति । रुक्मिणी अपि कृष्णेन याचित्वा चिपिटकणिकाः खादति । चिपिटकणिकानां भक्षणे तयोः मुखे या प्रसन्नता आसीत्, सा प्रसन्नता मधुराणां व्यञ्जनानां भक्षणेनापि सुदाम्नः मुखे आगता नासीत् । लज्जाम् अनुभवन् अपि सुदामा विस्मितो भवति ।)

सुदामा र कृष्णको भेटघाटपछि भोजनपश्चात् सुदामालाई पलङमा राखी कृष्ण सुदामाको खुट्टानजिकै बसेका छन् । ती दुई परस्परमा वार्तालाप गर्दछन् । लामो समयपछि सम्झेर आएका सुदामालाई कृष्ण पहिले बिर्सिनुको कारण सोध्छन् । सुदामा कृष्णलाई कहिल्यै बिर्सिन नसक्ने कुरा गर्छन् र कृष्णलाई पनि बिर्सिनुको र आफूलाई नखोज्नुको कारण सोध्छन् । कृष्ण विविध उदाहरण दिँदै सुदामा आफ्नो मनमै रहेको कुरा बताउँछन्, वासस्थान थाहा नभएका कारण खोज्न नसकेको कुरा सुनाउँछन् र वासस्थान थाहा हुँदा पनि आफूलाई नखोज्नुको कारण पनि सुदामालाई सोध्छन् । सुदामा गुरुकुलमा सँगै पढ्दा एक्लै चना खाएको प्रसङ्ग सुनाउँदै कृष्णसँग माफी माग्दछन् र त्यही कारणले मुख देखाउन नसकेको कुरा बताउँछन् । कृष्ण बाल्यकालमा स्वभावको चञ्चलताका कारण गरिएको सामान्य गल्तीका लागि त्यत्रो चिन्ता लिन नहुने कुरा बताउँदै आफूले त्यो घटना बिर्सिसकेको बताउँछन् । कृष्णबाट क्षमा पाइसकेपछि मन हलुको भएको भन्दै सुदामा कृष्णलाई भेट्नका लागि जोड गरेकामा पत्नी सुशीलालाई धन्यवाद दिन्छन् । विवाहको प्रसङ्गमा परिहास गर्दै कृष्ण सुदामाले लज्जाको अनुभूति गर्दागर्दै पनि सुदामाको हातबाट चिउराको कनिका खोसेर खान्छन् र रुक्मिणीलाई पनि दिन्छन् । त्यो चिउराको कनिका खाँदा ती दुईको मुखमा झल्किएको प्रसन्नता देखेर सुदामा आश्चर्यचकित हुन्छन् ।

## १३. प्रदत्तप्रसङ्गाधारेण निर्दिष्टकार्याणि कुरुत

कृष्णसुदामानौ गुरोः सान्दीपनेः आश्रमे अधीयानौ आस्ताम् । "गुरुशुश्रूषया विद्या" इति वचनमाधृत्य गुरोः सेवायै सर्वेऽपि शिष्याः प्रयतन्ते स्म । गुरुकुले गुरुमाता अपि निवसति स्म । समिदादीनां व्यवस्थापनेन सान्दीपनेः यज्ञादिषु साहाय्यविधानं तस्याः प्रमुखं कार्यम् आसीत् । सा छात्रान् समिदादीनाम् अन्वेषणाय प्रेषयति स्म । एकदा सा समिधाम् अन्वेषणाय कृष्णं सुदामानं च प्रेषितवती । "वने तौ बुभुक्षया पीडितौ भवितुं शक्नुतः" इति विचार्य गुरुमाता ताभ्यां बुभुक्षायां भक्षयितुं चणकान् प्रदत्तवती । तौ समिधाम् अन्वेषणाय अगच्छताम् । समिदन्वेषणक्रमे भीषण वर्षा अजाय । तौ एकं वृक्षम् आरूढवन्तौ । वृक्षस्य एकस्यां शाखायां कृष्णः अतिष्ठत्, अपरस्यां शाखायाम् सुदामा अतिष्ठत् । जलं वर्षं वर्षम् अन्धकारः समजायत । जलेन पूर्णतया आर्द्रौ तौ शैत्येन बुभुक्षया च पीडितौ अभवताम् । चणकाः सुदाम्नः पाश्वे आसन् । स तान् एकाकी भक्षयितुम् आरभत । यद्यपि सुदामा कृष्णस्य प्रियसखः आसीत्, तथापि लोभस्य कारणेन सुदामा कृष्णाय चणकान् न प्रायच्छत् । कृष्णः अपृच्छत्, "किं भुञ्जानः असि ?" लोभवशात् सुदामा अकथयत्, "किमपि न ।" पुनः कृष्णः अकथयत्, "चर्वणध्वनिः श्रूयते । गुरुमात्रा प्रदत्तान् चणकान् भक्षयसि किम् ?" सुदामा अकथयत्, "न कृष्ण ! चणकास्तु वृक्षारोहणसमये भूमौ अपतन् । अधुना तु शैत्येन मम दन्ताः ध्वनिं कुर्वन्तः सन्ति ।" मम वचनं श्रुत्वा कृष्णः "एवम्" इत्युक्त्वा तूष्णीम् अतिष्ठत् । सुदामा सर्वानपि चणकान् अभक्षयत् । वर्षाणां समापनानन्तरम् तौ गुरुकुलम् अगच्छताम् । "सुदामा एकाकी चणकान् अभक्षयत्" इति विषयं ज्ञातवान् अपि कृष्णः कदापि तस्मिन् विषये सुदाम्ना सह विमर्शनं न अकरोत् । सः अचिन्तयत्, "सुदामा बुभुक्षया अत्यन्तं पीडितः स्यात् । अतः तेन एकाकिना चणकाः भक्षिताः । केवलं चणकैः अस्माकं मैत्री कथं समाप्येत ?" कालानन्तरं सुदामा दरिद्रः सञ्जातः, कृष्णस्तु द्वारकाधीशः सञ्जातः । सैव घटना अत्र कारणं भवितुं शक्नोति, यतः-

यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति ॥

गुरुकुलमा बसी गुरुको सेवा गरेर विद्या आर्जन गर्ने गुरुकुलीन परम्परालाई आत्मसात् गर्दै कृष्ण पनि अध्ययनार्थ सान्दीपनि गुरुको गुरुकुलमा गएका थिए । सुदामा कृष्णका मित्र थिए । कुनै दिन गुरुआमाले सुदामा र कृष्णलाई दाउरा खोज्न जङ्गल पठाउनुभयो र भोक लागेमा खानका लागि अलिकति चना पनि दिनुभयो । चना सुदामाको हातमा थियो । जङ्गल गएर दाउरा खोज्दै गर्दा घनघोर वर्षा भयो । कृष्ण र सुदामा एउटा रुखमा चढे र छुट्टाछुट्टै हाँगमा बसे । पानी पर्दापर्दै अन्धकार भयो । भिजेका कारण दुवै जाडोले कठ्याङ्गिएका थिए । सुदामाले गुरुआमाले दिएको चना सम्झिए र निकालेर खान थाले । खाँदा चपाएको आवाज आयो । कृष्णले पनि चना मागे । लोभले गर्दा सुदामाले झुट बोले, 'रुख चढ्दा चना खस्यो ।' दाँतको आवाजका विषयमा कृष्णले जिज्ञासा

राख्दा उनले भने, 'जाडोका कारण दाँत कटकटाएका हुन् ।' वर्षा रोकियो । उनीहरू फर्किए । सुदामाको कर्तुत थाहा पाए पनि कृष्णले केही भनेनन् । सोचे, 'सुदामालाई धेरै भोक लागेको थियो होला ।' समय बित्यो । पढाइ सकेर दुवै कर्मक्षेत्रमा लागे । सुदामा गरिबभन्दा गरिब बन्दै गए । कृष्ण द्वारका सहरका मालिक भए । शिक्षा उही हुँदाहुँदै पनि यी दुईका बिचको यो अन्तर हुनुमा त्यही घटना त कारण होइन ? किनभने जस्तो कर्म गरिन्छ, त्यस्तै फल हामीलाई भाग्यका रूपमा यही जीवनमा प्राप्त हुन्छ ।

**(क) परस्परं मेलयत**

| | |
|---|---|
| सान्दीपनिः | एकाकी चणकान् अभक्षयत् । |
| गुरुमाता | कर्मफलं प्रयच्छति । |
| कृष्णः | सुदामकृष्णयोः गुरुः आसीत् । |
| सुदामा | चणकान् प्रायच्छत् । |
| विधाता | द्वारकाधीशः सञ्जातः । |

**(ख) एकवाक्येन प्रश्नान् उत्तरयत**

(क) गुरुमातुः प्रमुखं कर्तव्यं किमासीत् ?

(ख) चणकाः कस्य पार्श्वे आसन् ?

(ग) समिदन्वेषणक्रमे किम् अजायत ?

(घ) कालानन्तरं सुदामा कीदृशः अभवत् ?

(ङ) विधातृवशाद् जनः किम् उपैति ?

**(ग) सङ्क्षेपेण उत्तरयत**

(अ) 'गुरुशुश्रूषया विद्या' इत्यस्य तात्पर्यं किम् ? तन्मते युष्माकं समर्थनमस्ति न वा ?

(आ) 'सुदाम्ना सख्ये अप्रदाय एकाकिना चणकाः भक्षिताः' अत्र बुभुक्षा लोभो वा कारणं स्यात् ? सतर्कमुपस्थापयत ।

(इ) किं सुदाम्नो दारिद्र्यस्य कारणं चणकभक्षणप्रसङ्गो भवितुमर्हति ? श्लोकमाधृत्य स्वविचारं प्रस्तुत ।

## व्याकरणानुशीलनम्

### १. गुणसन्धिनियमान् पठत

(क) अ/आ+ इ/ई=ए

(अ) देव + इन्द्रः = देवेन्द्रः (आ) नर + ईशः = नरेशः

(इ) महा + इन्द्रः = महेन्द्रः (ई) प्रजा + ईश्वरः = प्रजेश्वरः

(ख) अ/आ + उ/ऊ = ओ

(अ) चन्द्र + उदयः = चन्द्रोदयः (आ) एक + ऊनः = एकोनः

(इ) महा + उपाध्यायः = महोदयः (ई) महा + ऊर्मिः = महोर्मिः

(ग) अ/आ +ऋ= अर्

(अ) देव + ऋषिः = देवर्षिः (आ) ब्रह्मा + ऋषिः = ब्रह्मर्षिः

## २. वृद्धिसन्धिनियमान् पठत

(क) अ/आ+ए/ऐ= ऐ

(अ) कृष्ण + एणः = कृष्णैणः (आ) सदा + एव = सदैव

(इ) मत + ऐक्यम् = मतैक्यम् (ई) महा + ऐश्वर्यम् = महैश्वर्यम्

(ख) अ/आ +ओ/औ= औ

(अ) परम + ओजस्वी = परमौजस्वी (आ) वन + औषधम् = वनौषधम्

(इ) महा + ओजस्वी = महौजस्वी (ई) महा + औषधम् = महौषधम्

## ३. सन्धिं विधाय निष्पन्नरूपाणि लिखत

दिव्य + औषधम्, महा + ऋद्धिः, मम + औत्सुक्यम्, वर्षा + ऋतुः,

चित्त + ऐकाग्र्यम्, नृप + ऐश्वर्यम्, नाथ + इति, सर्व + ईश्वरः, प्राचीन + ऐतिह्यम्,

तण्डुल + ओदनम्, ग्रीष्म + ऋतुः ।

## ४. सन्धिं विधाय सन्धिनामोल्लेखं च कुरुत

| विच्छिन्नं रूपम् | संहितं रूपम् | सन्धिनाम |
|---|---|---|
| सप्त+एते | | |
| गज+इन्द्रः | | |
| वन+ओकाः | | |
| महा+उत्सवः | | |
| वसन्त+ऋतुः | | |
| महा+ईशः | | |
| बाला+एषा | | |
| महा+ओजाः | | |
| परम+उत्तमः | | |
| यथा+इच्छम् | | |
| तव+एव | | |
| स्वच्छ+उदकम् | | |

५. **सन्धिविच्छेदं कुरुत**

महेशः, तथैव, देवर्षिः, प्रेक्षते, जनैकता, एकैकम्, खगेन्द्रः, महौदार्यम्, परोपकारः, पुरुषोत्तमः, सर्वैश्वर्यम्, जलौघः, दीर्घैकारः, वीरैक्यम्, रमेशः, ज्ञानैश्वर्यम्, महौतुः, देवौजः ।

६. **सन्धिं कृत्वा वाक्यानां पुनर्लेखनं कुरुत**

(क) आकाशे तारा उदेति ।

(ख) वाटिकायां लता उद्भवति ।

(ग) बालिका ईश्वरं प्रणमति ।

(घ) यदा एते गच्छन्ति, तदा एव ते आगच्छन्ति ।

(ङ) गृहं गच्छ इति पिता वदति ।

(च) अस्माकं गृहस्य ऊर्ध्वं वायुयानस्य उड्डयनं भवति ।

(छ) समीरात् नर्मदा ईषत् पीना अस्ति ।

(ज) बालकेभ्यः बालिकानां सङ्ख्या ऊना वर्तते ।

(झ) सन्ध्यावन्दने अनिवार्यता एव वर्तते, अतः सन्ध्या ऐच्छिकी नास्ति ।

(ञ) इन्द्रः सदा ऐरावते आरोहति ।

(ट) विमला ओजस्विनी वर्तते ।

(ठ) सूदो महानसे तण्डुलस्य ओदनं पचति ।

(ड) विद्यालये आगत्य औग्र्यं न प्रदर्शनीयम् ।

७. **पाठाद् गुणसन्धिना वृद्धिसन्धिना च संहितानि पदानि अन्विष्य लिखत ।**

८. **एकतश्चतुरन्ताः सङ्ख्याः त्रिषु लिङ्गेषु भिन्नरूपाः भवन्ति । सारिण्यां त्रिषु लिङ्गेषु भिन्नरूपाणां सङ्ख्यानां रूपाणि प्रदत्तानि सन्ति । सारिणीतः उपयुक्तं सङ्ख्यावाचकपदमवचित्य रिक्तस्थानं पूरयत**

| सङ्ख्या | पुंलिङ्गे | स्त्रीलिङ्गे | नपुंसकलिङ्गे |
|---|---|---|---|
| १ | एकः | एका | एकम् |
| २ | द्वौ | द्वे | द्वे |
| ३ | त्रयः | तिस्रः | त्रीणि |
| ४ | चत्वारः | चतस्रः | चत्वारि |

(क) दशरथस्य ........ पुत्राः आसन् । (४)

(ख) ........ बालकः विद्यालयं गच्छन् अस्ति । (१)

(ग) बिल्वपत्रे .......... पत्राणि भवन्ति । (३)

(घ) .......... छात्रे संस्कृतं पठन्त्यौ स्तः। (२)

(ङ) .......... कन्याः मार्गे चलन्त्यः सन्ति। (३)

(च) अस्माकं ग्रामस्य समीपे ......... वनम् अस्ति। (१)

(छ) वने ......... व्याघ्रौ स्तः। (२)

(ज) वृक्षे ........... फलानि सन्ति। (४)

(झ) देवक्याः ........ पुत्री आसीत्। (१)

(ञ) मम पार्श्वे ........ पुस्तके वर्तेते। (२)

(ट) ........ मनुष्याः ग्रामात् पलायन्त। (३)

(ठ) अस्माकं जनपदे ......... नद्यः सन्ति। (४)

९. **पञ्चतः अधिकाः सङ्ख्याः त्रिषु लिङ्गेषु समानरूपाणि भवन्ति। सारिण्यां विंशत्यन्ताः सङ्ख्याः निर्दिष्टाः सन्ति। सारिणीं दृष्ट्वा अनुच्छेदे वर्तमानेषु सङ्ख्याचिह्नेषु सङ्ख्यावाचकपदानि लिखत**

| सङ्ख्या | वाचकपदानि | | सङ्ख्या | वाचकपदानि |
|---|---|---|---|---|
| ५ | पञ्च | | १३ | त्रयोदश |
| ६ | षट् | | १४ | चतुर्दश |
| ७ | सप्त | | १५ | पञ्चदश |
| ८ | अष्ट/अष्टौ | | १६ | षोडश |
| ९ | नव | | १७ | सप्तदश |
| १० | दश | | १८ | अष्टादश |
| ११ | एकादश | | १९ | एकोनविंशतिः |
| १२ | द्वादश | | २० | विंशतिः |

नरेशस्य परिवारे २० सदस्याः सन्ति। तस्य परिवारे पितामही पितामहश्चेति २ वृद्धौ स्तः। पितामही ४ पुत्रान् जनितवती आसीत्। नरेशस्य पिता ज्येष्ठः अस्ति। अन्ये ३ तस्य पितृव्याः सन्ति। पिता, माता, पितृव्याः, पितृव्याश्चेति ८ तस्मिन् गृहे मिलित्वा तिष्ठन्ति। पञ्चानां दम्पतीनाम् १० सन्ततयः सन्ति। तेषु नरेशः ज्येष्ठः अस्ति। तेषु ७ भगिन्यः सन्ति चेत् २ भ्रातरौ स्तः। नरेशस्य ५ पितृष्वसारः अपि सन्ति। ताः सर्वाः विवाहिताः सन्ति। अतस्ताः स्वगृहेषु एव तिष्ठन्ति। तासां सर्वासां १५ सन्ततयः सन्ति। तासु ६ नरेशाद् ज्येष्ठाः सन्ति चेद् ९ नरेशात् कनिष्ठाः सन्ति। विजयादशम्यां ते सर्वेऽपि नरेशस्य गृहम् आगच्छन्ति। सर्वे पितामहाभ्यां टीकां धारयित्वा आशीर्वादं गृह्णन्ति। नरेशस्य पित्रा १ गौः पालिता अस्ति। सा प्रतिदिनम् १२ लिटरपरिमितं दुग्धं ददाति। अतो नरेशस्य गृहे विजयादशम्यां दुग्धाद् रसगोलकादीनि मिष्टान्नानि निर्मीयन्ते। नरेशस्य परिवारः शाकाहारी अस्ति। अतस्ते विजयादशम्यां प्रायेण तानि

एव मिष्टान्नानि भुञ्जते। नरेशस्य पितुः, पितृव्यानाम्, पितृष्वसृणां च दम्पतीनां १८ सदस्याः मिलित्वा विजयादशम्यां प्रायेण देउडागानं कुर्वन्ति। नरेशस्य प्रतिवेशिनः गृहे १९ सदस्याः सन्ति। तेषु ११ कार्यार्थं परदेशं गताः सन्ति। विजयादशम्यां ते प्रायेण अवकाशं न प्राप्नुवन्ति। अतस्तेषां गृहे विजयादशमी प्रायेण उल्लासमयी न भवति। परं नरेशस्य परिवारे सर्वे ग्रामे एव परिश्रमेण कार्यं कुर्वन्ति, केऽपि विदेशं गतवन्तः न सन्ति। अध्ययनार्थं नगरं गताः अपि विजयादशमीतः १४ दिनेभ्यः पूर्वमेव गृहम् आगच्छन्ति। अतो नरेशस्य गृहे विजयादशमी उल्लासमयी भवति।

**१०. अधस्तनं संवादं पठित्वा प्रयुक्तानि सङ्ख्यावाचकपदानि लिखत**

आपणिक- भवतः कृते किम् आवश्यकम् अस्ति ?

ग्राहकः - पुस्तिकाः सन्ति ? पुस्तिकायाः मूल्यं कियद् अस्ति ?

आपणिक - (द्वे पुस्तिके प्रदर्शयन्) अस्याः पञ्चदश रूप्यकाणि, अस्याः विंशतिः रूप्यकाणि।

ग्राहकः - पञ्चदशानां षट्, विंशत्याश्च द्वादश पुस्तिकाः ददातु। लेखन्याः कृते कति रूप्यकाणि आवश्यकानि ?

आपणिक - (तिस्रः लेखनीः प्रदर्शयन्), अस्याः दश रूप्यकाणि, अस्याः अष्ट रूप्यकाणि, अस्यास्तु अष्टादश रूप्यकाणि।

ग्राहकः - एवं चेद् मह्यम् अष्टादशानाम् एका, अष्टानां सप्तदश, दशानां च नव लेखनीः ददातु। अङ्कनी अस्ति ?

आपणिक - आम् अस्ति। अङ्कन्यस्तु सप्तविधाः सन्ति परं सर्वेषां मूल्यं समानम् अस्ति।

ग्राहकः - कियद् अस्ति मूल्यम् ?

आपणिक - प्रत्यङ्कनि चत्वारि रूप्यकाणि आवश्यकानि सन्ति।

ग्राहकः - मह्यं चतुर्दश अङ्कनीः ददातु। श्रीमद्भगवद्गीतायाः पुस्तकानि सन्ति ?

आपणिक - सन्ति। अर्थसहितानि अपि सन्ति। केवलं श्लोकमयानि अपि सन्ति। भवान् कीदृशं पुस्तकम् इच्छति ?

ग्राहकः - उभयोः मूल्यां किम् ?

आपणिक - अर्थसहितस्य एकोनविंशतिः, अर्थरहितस्य एकादश रूप्यकाणि।

ग्राहकः - एवम् ? मह्यम् अर्थसहितानि त्रयोदश, अर्थरहितानि षोडश पुस्तकानि ददातु।

आपणिक - अन्यत् किमपि इच्छति भवान् ?

ग्राहकः - न, अधुना एतावद् एव।

आपणिक - गृह्णातु भवतः सामग्रीः।

ग्राहकः - भवान् रूप्यकाणि गृह्णातु।

आपणिक - धन्यवादाः।

ग्राहकः - भवते अपि धन्यवादाः।

११. **सङ्ख्यावाचकैः पदैः अधस्तनान् प्रश्नान् उत्तरयत**

(क) तव कक्षायां कति छात्राः वर्तन्ते ?

(ख) तेषु कियत्यः स्त्रियः सन्ति ? कियन्तश्च पुरुषाः सन्ति ?

(ग) कति शिक्षकाः युष्मान् पाठयन्ति ?

(घ) शिक्षकेषु स्त्रियः कियत्यः सन्ति ? कियन्तश्च पुरुषाः सन्ति ?

(ङ) तव कक्षायां कियन्ति पुस्तकानि पाठ्यन्ते ?

१२. **प्रश्नार्थकपदैः सङ्ख्यावाचकानि पदानि प्रतिष्ठाप्य प्रश्ननिर्माणं कुरुत**

(क) नेपाले सप्त प्रदेशाः सन्ति ।

(ख) वाग्वतीप्रदेशे त्रयोदश जनपदानि विद्यन्ते ।

(ग) एकादश नद्यः वाग्वतीप्रदेशं पवित्रयन्ति ।

(घ) प्रदेशविभाजनात् पूर्वं नेपाले चतुर्दश अञ्चलानि आसन् ।

(ङ) नेपाले अष्टौ पर्वताः अष्टसहस्रमिटरपरिमाणाद् अपि उन्नताः सन्ति ।

१३. **'सुदामन्' शब्दस्य रूपाणि पठित्वा पाठे प्रयुक्तानां 'सुदामन्' शब्दस्य रूपाणां विभक्तिवचननिर्देशं कुरुत**

| | **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** |
|---|---|---|---|
| प्रथमा | सुदामा | सुदामानौ | सुदामानः |
| द्वितीया | सुदामानम् | सुदामानौ | सुदाम्नः |
| तृतीया | सुदाम्ना | सुदामभ्याम् | सुदामभिः |
| चतुर्थी | सुदाम्ने | सुदामभ्याम् | सुदामभ्यः |
| पञ्चमी | सुदाम्नः | सुदामभ्याम् | सुदामभ्यः |
| षष्ठी | सुदाम्नः | सुदाम्नोः | सुदाम्नः |
| सप्तमी | सुदाम्नि/सुदामनि | सुदाम्नोः | सुदामसु |
| सम्बोधनम् | हे सुदामन् | हे सुदामानौ | हे सुदामानः |

१४. **लकारस्य रूपं पठत**

भूतकाले सामान्यतया लङ्लकारस्य रूपाणि प्रयुज्यन्ते । लङ्लकारस्य बहुशो धातूनां रूपाणि इत्थं भवन्ति-

| | एकवचनम् | द्विवचनम् | बहुवचनम |
|---|---|---|---|
| प्रथमपुरुषः | अ+धातुः+अत् | अ+धातुः+अताम् | अ+धातुः+अन् |

| | | | |
|---|---|---|---|
| मध्यमपुरुषः | अ+धातु+अः | अ+धातु+अतम् | अ+धातु+अत |
| उत्तमपुरुषः | अ+धातु+अम् | अ+धातु+आव | अ+धातु+आम |

उदाहरणम्

पठ्-धातोः लङ्लकारस्य रूपावली

| | एकवचनम् | द्विवचनम् | बहुवचनम |
|---|---|---|---|
| प्रथमपुरुषः | अपठत् | अपठताम् | अपठन् |
| मध्यमपुरुषः | अपठः | अपठतम् | अपठत |
| उत्तमपुरुषः | अपठम् | अपठाव | अपठाम |

**१५. क्रियापदानां वाक्ये प्रयोगस्तु कर्तृपदस्य पुरुषवचने आधृत्य विधीयते । उदाहरणम् आधृत्य रिक्तस्थानेषु पठ्धातोः लङ्लकारस्य रूपाणि लिखत**

उदाहरणम्- बालिका पुस्तकम् अपठत् ।

(क) बालिके पुस्तकम् .......... ।

(ख) बालिकाः पुस्तकम् ........... ।

(ग) त्वं पुस्तकम् ............. ।

(घ) युवाम् पुस्तकम् ........... ।

(ङ) यूयं पुस्तकम् ............ ।

(च) अहं पुस्तकम् ............. ।

(छ) आवां पुस्तकम् .............. ।

(ज) वयं पुस्तकम् .................।

**१६. पठ्धातोः लङ्लकारस्य रूपावलीम् अनुसृत्य अधः प्रदत्तानां धातूनां रूपावलीं रचयत**

(क) लिख् (ख) वद् (ग) गम्(गच्छ)

(घ) पा(पिब) (ङ) जीव् (च) चल्

**१७. कोष्ठस्य धातूनां लङ्लकारस्य रूपाणि विलिख्य रिक्तस्थानं पूरयत**

(क) भृत्यौ स्वामिनं.........। (दृश्)

(ख) धार्मिका ईश्वरं...........। (नम्)

(ग) यूयं भोजनम् ........। (खाद्)

(घ) रामलालः कविताम्..............। (लिख्)

(ङ) वयं ह्यः काष्ठमण्डपनगरम् .....। (गम्)

१८. शिक्षकस्य साहाय्येन 'अस्'धातोः, 'श्रु'धातोः, 'दा'धातोः, 'कृ'धातोश्च लङ्लकारस्य रूपाणि अन्विष्य लिखत, ततः प्रतिधातु त्रीणि वाक्यानि च रचयत ।

१९. लङ्लकारस्य क्रियापदानि प्रयुज्य स्वस्य दैनन्दिनीं रचयत ।

२०. पाठात् लङ्लकारस्य पञ्च क्रियापदानि अन्विष्य लिखत ।

२१. कारकरूपं पठत

यस्मै प्रयोजनाय कार्यं क्रियते, यस्मै च यत् किमपि दीयते तद् उभयं सम्प्रदानं भवति । सम्प्रदानकारके चतुर्थीविभक्तिर्भवति ।

यथा- ते क्रीडनाय क्रीडाङ्गणं गच्छन्ति ।
सीता अनुजायै उपहारं यच्छति ।

२२. परस्परं मेलयित्वा वाक्यानि रचयत

| | | |
|---|---|---|
| वयम् | सुखाय | उपवनं गच्छन्ति । |
| छात्रौ | देशस्य समृद्धये | गीतां पठामः । |
| ज्ञानम् | ज्ञानाय | विद्यालयं गच्छतः। |
| एते | पठनाय | प्रयतते । |
| सर्वकारः | भ्रमणाय | भवति । |

२३. कोष्ठस्य उचितपदैः वाक्यानि पूरयत

(गोभ्याम्,मित्राय,देशाय,परोपकाराय,पठनाय)

(क) प्रभा .......... उपहारं यच्छति ।

(ख) वयं ........... विद्यालयं गच्छामः ।

(ग) वृक्षाः ..........भवन्ति ।

(घ) कृषकाः .........तृणं नेष्यन्ति ।

(ङ) नेतारः ............ कार्यं कुर्वन्तु ।

२४. यूयं कस्मै किं दातुम् इच्छथ ? पञ्च वाक्यानि लिखत ।

## रचनात्मकः अभ्यासः

१. आत्मना विहितायाः कस्याश्चिद् यात्रायाः वर्णनं कुरुत ।

२. काञ्चित् प्रेरणादायिनीं पौराणिकीं कथां स्वशैल्या विलिख्य तत्सन्देशविषये विमर्शं कुरुत ।

३. यूयं कीदृशीं मैत्रीम् इच्छथ ? एकम् अनुच्छेदं लिखत ।

## श्रवणपाठः

अधुना वयं भ्रमणाय कालिञ्चोकक्षेत्रे आगताः स्मः। इदं क्षेत्रं दोलखामण्डले अवस्थितं वर्तते। चरिकोटनगरात् पञ्चहोरात्मिकां पदयात्रां विधाय वयम् अत्र आगताः स्मः। मार्गे अस्माभिः अत्रत्यं जनजीवनं दृष्टम्। जनाः अत्र पशुपालनेन, व्यापारेण, कृषिकर्मणा च जीवनं निर्वाहयन्ति। चमरीणां मेषाणां च गोष्ठानि मार्गे कुत्रचन दृश्यन्ते। विशेषतः कोद्रव-यवादीनां कृषिरत्र भवति। अत्र वने बहुविधाः ओषधयः लभ्यन्ते। गुरुः वृक्षाणाम् औषधानां च नामानि शिक्षयन् आसीत्।

'कुरी'क्षेत्राद् कालिञ्चोकमन्दिरं यावद् रज्जुयानं चलति। रज्जुयानेनैव वयमत्र सम्प्राप्ताः। कालिञ्चोकक्षेत्रं संस्कृत्या प्रकृत्या च समृद्धं वर्तते। कालिञ्चोकभगवत्याः इदं मन्दिरं सुप्रसिद्धं वर्तते। अस्यैव नाम्ना एतस्याः ग्रामपालिकायाः नामकरणं विहितम् अस्ति। अत्रत्या प्रकृतिरपि अतीव मनोहरा वर्तते। हिमालयक्षेत्रे अवस्थिते अस्मिन् क्षेत्रे अनेके हरितवृक्षाः सन्ति। वसन्तसमये अत्र विचित्राणि गुराँसपुष्पाणि विकसन्ति। तस्मिन् समये इदं क्षेत्रं राष्ट्रियपुष्पाणाम् उद्यानम् इव प्रतिभाति। गुरोर्मुखाद् अस्य क्षेत्रस्य वर्णनं श्रुत्वा वयम् मुग्धाः स्मः।

अद्य आकाशं निर्मलं वर्तते। अतः मन्दिरपरिसरात् उत्तरतः सुन्दराः हिमालयाः दृश्यन्ते। गौरीशङ्कर-हिमालयं दृष्ट्वा सखायः चित्रग्राहकयन्त्रैः चित्राणि गृह्णन्तः सन्ति। 'चित्रमेव न गृहाण, अयम् एव अस्माकं देशस्य समयनिर्धारकः हिमालयो वर्तते इति जानीहि' सुदेशः उक्तवान्। 'एषा पुरो दृश्यमाना शृङ्खला रोल्वालिङ-हिमशृङ्खला वर्तते' गुरुः पुनरुक्तवान्। अहन्तु इतस्ततः दृष्ट्वा हर्षातिरेकेण अभिभूत आसम्।

'इतः सूर्योदयस्य दृश्यमपि अतीव शोभनं दृश्यते' अस्मादृशाः एव यात्रिणः वर्णयन्तः आसन्। 'शीतसमये अत्र हिमक्रीडायै आगन्तव्यम्' अन्ये योजनां प्रस्तुवन्तः आसन्। श्रद्धालवः भगवत्याः दर्शनं कुर्वन्तः आसन्। भजनं च गायन्तः आसन्। इतस्ततः विकीर्णं सङ्करं दृष्ट्वा मदीयं चित्तं खिन्नम् अभवत्। अस्माकं प्रमादवशाद् एतादृशं महत्त्वपूर्णं स्थलं प्रदूषितं विद्यते। एतस्य व्यवस्थापनाय अस्माभिः प्रयासः करणीयः इति मनसि विचारः उदभवत्। प्रत्यावर्तनस्य समयः सञ्जात आसीत्। सर्वे बुभुक्षिताः आसन्। गुरुः तस्य क्षेत्रस्य महत्त्वम् वर्णयन् आसीत्। पदयात्रया एव वयं कुरीग्रामपर्यन्तं समायाताः। अस्य क्षेत्रस्य महत्त्वं मनसि निधाय भोजनं अकरवाम। अस्माकं शरीरे शक्तिर्नासीत्, अतः यानेनैव ततः प्रत्यावृत्ताः।

अद्य अस्माभिः बहु ज्ञानं लब्धम्। 'भ्रममाणो बहून् देशान् बहुज्ञो जायते नरः' इति नीतिवाक्यस्य प्रयोगात्मिका अनुभूतिर्जाता। शरीरे शैथिल्यम् अस्ति, किन्तु मनः अतीव प्रसन्नं वर्तते।

पञ्चमः पाठः

# मिथिलाचित्रकला

## पाठप्रवेशः

(आशुतोषः श्रेष्ठः पुतलीसडक स्थाने निवसति । स ललितकलामहाविद्यालये चित्रकलाविषयमवलम्ब्य पठति । तस्य भगिनी श्रेया पद्मोदयविद्यालये नवम्यां कक्षायां पठति । ह्यस्तनदिवसे अवकाशः आसीत् । भ्रातृभगिन्यौ प्रदर्शनीमार्गे समायोजितां सप्ताहव्यापिनीं सांस्कृतिक-चित्रकलाप्रदर्शनीं द्रष्टुम् अगच्छताम् । तत्र कानिचन चित्राणि ताभ्यां क्रीणितानि । चित्राणि गृहमानीय भित्तिषु सज्जीकृतानि । अद्य प्रातः चायपानावसरे आशुतोषः तानि एव चित्राणि पश्यन् आसीत् । श्रेया अपि तत्रैव आगतवती । ततस्तयोः वार्ता जाता ।)



श्रेया- अग्रज ! भवान् तु चित्रकलां पठति । मह्यमपि चित्राणि रोचन्ते परन्तु अन्यदपि वा मनोहरणमेव तेषां प्रयोजनमस्ति ?

आशुतोषः- त्वया समीचीनः प्रश्नः विहितः । मनोहरणं तु कलायाः विशेषतैव । अस्य प्रयोजनानि विविधानि सन्ति । चित्रमाध्यमेन वयं स्वस्य संस्कृतिं प्रकटीकर्तुं शक्नुमः । समाजस्य विकृतेः विसङ्गतेश्च विरोधं कर्तुं शक्नुमः । जनचेतनायै अपि चित्राणां प्रयोगो भवति ।

## रचनात्मकः अभ्यासः

१. **पाठस्य नीतिपद्यानि कर्गजपट्टे लिखित्वा सज्जीकृत्य कक्षाकोष्ठस्य भित्तौ संश्लेषयत ।**

२. **मञ्जूषायाः साहाय्येन अधस्तनं चित्रं पञ्चभिः वाक्यैः वर्णयत**



यथा– अत्र चाणक्य-चन्द्रगुप्तयोः चित्रमस्ति ।

**मञ्जूषा**

| |
|---|
| आचार्यः चाणक्यः, चन्द्रगुप्तः, हस्ते, असी, शिखा, तिलकम्, कङ्कणम्, पश्यति, धारयति, दीर्घकेशाः, पीतवस्त्रम्, युद्धम्, सज्जता, साहाय्यम् |

### श्रवणपाठः

अस्माकं संस्कृतिरतीव प्राचीना । इयं संस्कृतिरत्यन्तं समृद्धा च वर्तते । अस्माकं संस्कृतौ मातृशक्तेरुपासनायाः सुदृढा परम्परा वर्तते । मातृशक्तिः सदैव सम्मानिता, पूजिता च शक्तिरस्ति । यत्र नारीणां पूजनं भवति, तत्र देवता अपि रमन्त इति अस्माकं संस्कृतिरेव अस्मान् शिक्षयति । मनुस्मृतौ पितुः शतगुणं मातुर्महत्त्वं निर्दिष्टमस्ति ।

देवतानां नामग्रहणावसरे प्रायो मातृशक्तीनामेव नामोच्चारणं पूर्वं भवति । यथा भवानीशङ्करौ, राधाकृष्णौ, लक्ष्मीनारायणावित्यादि । मातृशक्तेरुपासनाया विशेषा पद्धतिरस्माकं समाजे प्रचलिता वर्तते । शारदीयनवरात्रे भगवत्या दुर्गाया उपासना भवति । ऋग्वेदस्य देवीसूक्तम्, श्रीसूक्तम्, लक्ष्मीसूक्तञ्च मातृशक्तेर्महिमगानं करोति । तत्र तत्र जगत्सृष्टि-स्थिति-लयहेतुत्वेन भगवत्या महिमा गीतोऽस्ति । नवरात्रावसरे नवदुर्गारूपेण नवदेवीनामाराधनं भवति । पुराणे तन्नामानि एवं समुल्लिखितानि सन्ति-

प्रथमं शैलपुत्री च द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकम् ॥
पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ।
नवमं सिद्धिदात्री च नवदुर्गाः प्रकीर्तिताः ॥

सप्तमः पाठः

# कार्यालयीयं पत्रम्

## पाठप्रवेशः

सत्यव्रतः	जानासि सत्यप्रिये ! पत्रलेखनस्य परम्परा कियती प्राचीना अस्ति ?

सत्यप्रिया	यदा वर्णानां लिपिपरम्परा प्रारब्धा, तदैव शनैः शनैर्विकसिता स्यात् । एवंप्रकारेण केवलमनुमातुं शक्यते । कदेति निश्चित्य वक्तुं तु न शक्यत एव ।




सत्यव्रतः	साधु कथितं सखि ! यदा पत्रलेखनस्य परम्परा प्रारब्धा भवेत्, तदा आधुनिकस्य कर्गदस्य आविष्कारो नासीत् । अतो जना भूर्जपत्रादिषु विलिख्य पत्रव्यवहारं कुर्वन्ति स्म इति श्रूयते । द्वापरान्तस्य वैदर्भ्या रुक्मिण्या श्रीकृष्णं प्रति विहितः प्रेमपत्रव्यवहारः श्रीमद्भागवतेऽतीव प्रसिद्धो वर्तते ।

सत्यप्रिया	आम्, एतत्तु अहमपि अश्रौषम् । प्राचीनकाले भूर्जपत्र-वस्त्रादिषु एव पत्रलेखनं प्रेषणञ्च भवति स्म । इदानीं तदर्थं कर्गदस्य प्रयोगो भवति ।

सत्यव्रतः	इदानीन्तु न केवलं कर्गदस्य, अपितु वैद्युतमाध्यमस्यापि प्रयोगः पत्रस्य लेखनाय प्रेषणाय च भवति । इमेल-माध्यमेन प्रेषितं पत्रञ्च सम्प्रति प्रामाणिकं मन्यते ।

सत्यप्रिया	अवश्यम् । ममापि इमेल-माध्यमेनैव पत्रव्यवहारः प्रायो भवति । लघुसन्देशानां प्रेषणाय तु मेसेञ्जर-ह्वाट्सएप्-भाइवर-इत्यादीनां प्रयोगो भवति ।

सत्यव्रतः	पत्रलेखनस्य परम्पराया विषये बहुः संलापोऽभूत् । इदानीं वाचनालयस्य द्वारपिधानस्य समयः । अतो गच्छाव । पुनर्मिलाव ।

सत्यप्रिया	अस्तु सत्यव्रत ! गच्छाव । पुनर्मिलाव ।

सत्यव्रत र सत्यप्रिया वाचनालयमा बसेर कुरा गरिरहेका हुन्छन् । उनीहरूको कुराकानी पत्रलेखनको परम्पराका विषयमा केन्द्रित छ । सत्यव्रत भन्छ, "तिमीलाई थाहा छ सत्यप्रिया ! पत्रलेखनको परम्परा कति पुरानो हो ?" उत्तरमा सत्यप्रिया भन्छिन्, "जहिले वर्णहरूको लिपिको परम्परा सुरु भयो, त्यही वेलादेखि बिस्तारै-बिस्तारै पत्रलेखनको परम्परा पनि सुरु भएको हुनुपर्छ । यसको यसरी केवल अनुमान मात्र गर्न सकिन्छ । यही समयदेखि भनेर किटान गरेर भन्न चाहिँ सकिँदैन ।" चिठी लेख्ने परम्परा सुरु भएका वेला कागजको आविष्कार नभइसकेकाले मानिसहरूले त्यस समयमा भोजपत्र, कपडा आदिमा लेखेर पत्रव्यवहार गर्ने गरेको कुरा आफूले सुनेको सत्यव्रत बताउँछ । द्वापरयुगको अन्तमा वैदर्भी रुक्मिणीले श्रीकृष्णलाई पठाएको प्रेमपत्र श्रीमद्भागवतमा अत्यन्तै प्रसिद्ध रहेको कुरो पनि ऊ बताउँछ । त्यो कुरो त आफूले पनि सुनेको भन्दै त्यो समयमा भोजपत्र, कपडा आदिको चलन भए तापनि अहिले आएर कागजकै प्रयोग हुने गरेको सत्यप्रिया बताउँछिन् ।

सत्यव्रत भन्छ, "अहिले त कागजको मात्र नभएर पत्रव्यवहारका लागि विद्युतीय माध्यमको समेत प्रयोग हुन्छ । इमेलद्वारा पठाएको चिठीसमेत अहिले प्रामाणिक मानिन्छ ।" सत्यव्रतको कुरामा समर्थन जनाउँदै आफूले पनि प्रायः इमेलबाटै पत्रव्यवहार गर्ने गरेको सत्यप्रिया बताउँछिन् । छोटा सन्देश पठाउनका लागि भने मेसेञ्जर, ह्वाट्सएप्, भाइवर आदिको प्रयोग हुने गरेकोसमेत उनी सुनाउँछिन् । चिठी लेख्ने परम्पराका विषयमा धेरै कुराकानी भएको र वाचनालयको ढोका बन्द हुने समयसमेत भइसकेकाले आजलाई छुट्टिने कुरो सत्यव्रत गर्छ । दुबै जना फेरि भेट्ने वाचाका साथ त्यहाँबाट छुट्टिन्छन् ।

## मूलपाठः कार्यालयीयं पत्रम्

दिनाङ्कः २०७८/०६/०१

श्रीमन्तः कार्यालयप्रमुखाः,

जनपद-प्रशासन-कार्यालयः, काष्ठमण्डपः

विषयः अवकर-व्यवस्थापनम् ।

महोदयाः,

श्रीमतां नाविदितमेतद् यदस्माकं नगरस्य अवकरव्यवस्थापनं प्रतिदिनं समस्यायमानमस्ति । नगरे प्रत्यहं यावन्तोऽवकरा निःसरन्ति, तत्सङ्कलनाय पर्याप्तानि अवकरवाहनानि एव न सन्ति । एतेन अवकरसङ्कलनाय वाहनानामुपलब्धता प्रतिनिवासक्षेत्रं यथासमयं न भवति । एतावदेव न, अपितु चतुष्पथेषु, प्रतीक्षालयेषु, पदमार्गेषु, सार्वजनिकस्थलेषु च यथापेक्षितानि अवकरभाण्डानि न सन्ति । जनाः अवकरान् यत्र तत्र क्षिपन्ति । ततो दुर्गन्धः प्रसरति । एतेन रोगाश्च वर्धन्ते ।

अतोऽवकराणां सङ्कलनम्, अवकरभाण्डानां पर्याप्तरूपेण यत्र तत्र स्थापनञ्च नितरामावश्यकम् । अवकराणां व्यवस्थापनेन अवकरनिचयेभ्यः प्रसृतो दुर्गन्धोऽपगच्छति । नगरस्य पर्यावरणं स्वच्छं भवति । तेन जनेषु निरामयता आगच्छति । नगरस्य स्वच्छीकरणेन सर्वेषां कृते लाभ एव भवतीति श्रीमन्तो नूनं जानन्ति । अतः स्वस्यावासक्षेत्रस्य प्रतिनिधित्वेन नगरस्य अवकराणां सम्यग् व्यवस्थापनाय श्रीमतः सादरं विनिवेदयामि । धन्यवादाः !

निवेदकः
देवराजः शर्मा
संयोजकः
सुविधानगर-विकास-समुदायः
सुविधानगरम्, काष्ठमण्डपः

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| जनपदः | मण्डलम् | जिल्ला | District |
| कार्यालयः | कार्यगृहम् | कार्यालयः | Office |
| अवकरः | मलम् | फोहोर | Garbage |
| प्रत्यहम् | प्रतिदिनम् | दिनैपिच्छे | Every day |
| समस्या | व्यवधानम् | समस्या | Problem |
| सङ्कलनम् | एकत्रीकरणम् | सङ्कलन | Collection |
| वाहनम् | यानम् | वाहन | Vehicle |
| प्रतीक्षालयः | प्रतीक्षाशाला | पाटी | Waiting hut |
| पदमार्गः | पदपथः | बाटोको पेटी | Footpath |
| रोगः | आमयः | बिमारी | Disease |
| अवकरभाण्डम् | मलपात्रम् | फोहर हाल्ने भाँडो | Grabage can |
| निचयः | समूहः | थुप्रो | A lot |
| नगरम् | पुरम् | सहर | City |
| पर्यावरणम् | वातावरणम् | पर्यावरण | Atmosphere |

| | | | |
|---|---|---|---|
| स्वच्छम् | निर्मलम् | सफा | Clean |
| निरामयता | नीरोगिता | स्वस्थता | Good health |
| नूनम् | निश्चयेन | अवश्य | Of course |
| आवासक्षेत्रम् | निवासक्षेत्रम् | टोल | Residential place |
| सम्यक् | सुष्ठु | राम्ररी | Well |
| प्रतिनिधिः | प्रतिनिधिपात्रम् | प्रतिनिधि | Representative |
| आवश्यकम् | अपेक्षितम् | आवश्यक | Necessary |
| निवेदकः | आवेदकः | निवेदन दिने व्यक्ति | Applicant |

## अभ्यासः

### श्रवणं भाषणं च

१. **शिक्षकाद् अधः प्रदत्तानि पदानि श्रुत्वा अनूच्चारयत**

चतुष्पथेषु, प्रतीक्षालयेषु, पदमार्गेषु, सार्वजनिकस्थलेषु, यथापेक्षितानि, अवकरभाण्डानि, क्षिपन्ति, दुर्गन्धः, प्रसरति, वर्धन्ते, सङ्कलनम्, पर्याप्तरूपेण, स्थापनम्, नितराम्, आवश्यकम् ।

२. **उदाहरणम् अनुसृत्य अधस्तनपदानां पदच्छेदं विधाय श्रावयत**

उदाहरणम् : यावन्तोऽवकराः = यावन्तः + अवकराः

अवकरनिचयेभ्यः, दुर्गन्धोऽपगच्छति, नाविदितमेतद्, यदस्माकम्, अवकरव्यवस्थापनम्, स्वस्यावासक्षेत्रस्य ।

३. **पाठं साभिनयमनुवाचयत ।**

४. **पाठाद् गृहीतानि अधस्तनानि पदानि प्रयुज्य एकैकं वाक्यं कक्षायां श्रावयत**

अस्ति, निःसरन्ति, सन्ति, भवति, क्षिपन्ति, प्रसरति, वर्धन्ते, अपगच्छति, आगच्छति, जानन्ति, विनिवेदयामि ।

५. **अनुवाचनपूर्वकं शिक्षकात् अधस्तनस्य स्तुतिपद्यस्य अर्थं श्रुत्वा प्रदत्तानां प्रश्नानाम् उत्तराणि कथयत**

आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं
प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ।
लक्ष्मीस्तोयतरङ्गभङ्गचपला विद्युच्चलं जीवितं
तस्मान्मां शरणागतं शरणद त्वं रक्ष रक्षाधुना ॥

(क) किं नश्यति ?

(ख) प्रतिदिनं किं क्षयं याति ?

(ग) गताः के पुनः न प्रत्यायान्ति ?

(घ) कः जगद्भक्षकः ?

(ङ) किं विद्युच्चलं वर्तते ?

(च) का चपला अस्ति ?

## ६. अधस्तनं संवादं सम्यग् पठित्वा नेपालीभाषया सारं कथयत

मुकुन्दः अयि मल्लिके ! कुतस्त्वम् ?

मल्लिका : सङ्गीत-प्रशिक्षण-केन्द्रतः समागच्छन्ती अस्मि ।

मुकुन्दः सम्प्रति च शास्त्रीयसङ्गीतस्य प्रशिक्षणं प्रचलति किम् ?

मल्लिका : आम् । एतत् प्रशिक्षणं महासप्तमीपर्यन्तं प्रचलति । तदनन्तरम् एव अवकाशः । ह्यः मम जन्मोत्सवपूजायां त्वं किमर्थं नागतः मुकुन्द ? मम सखीभिः सह गायनस्य च कार्यक्रमः शोभनः अभवत् ।

मुकुन्दः ह्यः कार्यवशाद् अहम् आगन्तुं नाशक्नवम् । तदर्थं क्षमां याचे परन्तु तव गायनस्य अनुरक्तः अस्मि । गतमासे विद्यालयस्य वार्षिकोत्सवे शास्त्रीय-सङ्गीतस्य तव प्रस्तुतिः अतीव शोभना आसीत् । अहो ! कियत् सुमधुरं गीतम् । कियती उत्तमा गायनशैली च ।

मल्लिका : प्रशंसायाः कृते धन्यवादः मुकुन्द ! मम शास्त्रीयसङ्गीतस्य गुरोः गोपालस्य अनुकम्पया अहं प्रशंसाभागिनी अभवम् । अहं तं प्रति अतीव कृतज्ञा अस्मि ।

मुकुन्दः ए मल्लिका ! कताबाट तिमी ?

मल्लिकाः सङ्गीत-प्रशिक्षण-केन्द्रबाट आउँदै छु ।

मुकुन्दः अहिले पनि शास्त्रीय सङ्गीतको प्रशिक्षण चलिरहेको छ र ?

मल्लिकाः अँ । यो प्रशिक्षण महासप्तमीसम्म चल्छ । त्यसपछि मात्र छुट्टी । हिजो मेरो जन्मोत्सवको पूजामा तिमी किन आएनौ ? साथीहरूसँग मेरो गाउने कार्यक्रम राम्रो भयो ।

मुकुन्दः हिजो कुनै विशेष कामले म आउन सकिनँ । त्यसका लागि माफी माग्छु । तिम्रो गायनको म फ्यान हुँ । गत महिना विद्यालयको वार्षिकोत्सवमा शास्त्रीय सङ्गीतको तिम्रो प्रस्तुति निकै राम्रो थियो । अहो ! कति मीठो गीत । कस्तो राम्रो गायनशैली ।

मल्लिकाः प्रशंसाका लागि धन्यवाद मुकुन्द ! शास्त्रीय सङ्गीतका गुरु गोपालज्यूको अनुकम्पाले म प्रशंसाका लागि योग्य भएँ । म उहाँप्रति अत्यन्तै कृतज्ञ छु ।

७. **उदाहरणानुसारं कोष्ठकस्थपदेभ्यः अर्थबोधं विधाय प्रदत्तपदानाम् अर्थं वदत**

प्राचीना, शनैः, विकसिता, निश्चित्य, साधु, आविष्कारः, प्रसिद्धः, सम्प्रति, बहुः, संलापः ।

उदाहरणम् : पुरातनी = प्राचीना

(क) मन्दम् = ..........................

(ख) शोभनम् = ..........................

(ग) उन्नीता = ..........................

(घ) प्रथितः = ..........................

(ङ) निश्चयं कृत्वा = ..........................

(च) उद्भवः = ..........................

(छ) अधिकः = ..........................

(ज) इदानीम् = ..........................

(झ) संवादः = ..........................

८. **अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' असत्यवाक्ये 'नहि ' इति वदत**

(क) नगरस्य अवकरव्यवस्थापनं समस्यायमानमस्ति । ............

(ख) नगरे पर्याप्तानि अवकरवाहनानि सन्ति । ..........

(ग) जनाः अवकरान् यत्र तत्र क्षिपन्ति । ............

(घ) अवकरेभ्यः सुगन्धः प्रसरति । ...........

(ङ) नगरस्य स्वच्छीकरणेन सर्वेषां कृते लाभो भवति । ...........

९. **नगरस्य स्वच्छीकरणं कथं कर्तव्यम् ? सखिभिः सह विमृश्य वदत ।**

१०. **श्रवणपाठस्याधारेण प्रश्नान् उत्तरयत**

**प्रश्नाः**

(क) द्वादशसु वर्षेषु कति दिनानि अवशिष्टानि आसन् ?

(ख) वनयात्रया पाण्डवा कुत्र गताः ?

(ग) के श्रान्ताः पिपासाकुलाश्च आसन् ?

(घ) कस्य आज्ञया नकुल वृक्षमारुरोह ?

(ङ) वृक्षाद् अवरुह्य नकुलः किं जगाद ?

(च) युधिष्ठिरो नकुलं किमाज्ञापयत् ?

(छ) नकुलः कस्य निकटे प्राप ?

(ज) नकुलः किं व्यचारयत् ?

(झ) नकुलो जलपानसमये किं शुश्राव ?

(ञ) को यक्षस्य वचनमपरिगणय्य जलं पपौ ?

(ट) श्रवणपाठस्य पठनानन्तरमत्यन्तं प्रसिद्धस्य प्रश्नोत्तरस्य विषये स्वविचारं प्रकटयत ।

## पठनम्

१. **आवासक्षेत्रस्य स्वच्छीकरणेन कीदृशो लाभो भवतीति अधीतपाठानुसारं प्रस्तुत ।**

२. **पाठे प्रदत्तं पत्रं निरवच्छिन्नं पठत ।**

३. **अधस्तनानि शुभाशयावचनानि वाचयत**

विजयादशम्या हार्दिकी शुभाशया ।

दुर्गा भवानी सदैव सुखं शान्तिमारोग्यञ्च प्रयच्छेत् ।

नूतनः संवत्सरः २०८० नवं समुत्साहं भावयतु ।

मङ्गलमयी कामना ।

४. **अधस्तनस्य पद्यस्य कक्षायां सामूहिकरूपेण सस्वरपठनं कुरुत**

अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।

शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतःपरम् ॥

५. **पाठप्रवेशस्य संवादपाठस्य मौनपठनं कृत्वा पत्रलेखनस्य परम्पराया विषये वदत ।**

## लेखनम्

१. **अधस्तनानां पदानाम् अशुद्धीः निराकुरुत**

अवकारः, व्यावस्थापनम्, प्रतीदिनम्, समस्यायमाणम्, प्रात्यहम्, नीःसरन्ति, सङ्कलानाय, पर्याप्तानी, वाहनानी, वाहननाम्, उपालब्धता ।

२. **अधस्तनानां पदानामर्थं लिखत**

अवकरः, निचयः, प्रसृतः, अपगच्छति, नगरम्, निरामयता, स्वच्छीकरणम्, लाभः, नूनम्, सम्यक्, सादरम् ।

३. **पाठात् उदाहरणस्येव कानिचन पञ्च समस्तपदानि अन्विष्य लिखत**

यथा– अवकरवाहनानि

४. **पाठस्य अन्तिमस्य वाक्यद्वयस्य श्रुतलेखनं कुरुत ।**

५. **पाठं पठित्वा प्रश्नान् उत्तरयत**

(क) नगरस्य किं प्रतिदिनं समस्यायमानमस्ति ?

(ख) नगरे किमर्थम् अवकरवाहनानि सन्ति ?

(ग) केषामुपलब्धता यथासमयं न भवति ?

(घ) कुत्र कुत्र यथापेक्षितानि अवकरभाण्डानि न सन्ति ?

(ङ) जनाः यत्र तत्र किं क्षिपन्ति ?

(च) अवकरेभ्यः किं प्रसरति ?

(छ) केन रोगाः वर्धन्ते ?

(ज) किं नितरामावश्यकम् ?

(झ) कस्य स्वच्छीकरणेन सर्वेषां कृते लाभो भवति ?

(ञ) देवराजः कस्य प्रतिनिधिः अस्ति ?

६. **अधस्तनेषु विषयेषु कार्यालयीयानि पत्राणि लिखत**

(क) स्वस्य ग्रामे पर्वभोजनस्य अजीर्णतया उत्पन्नस्य रोगस्य प्रकोपस्य शमनाय निःशुल्करूपेण ग्रामीणानां स्वास्थ्यपरीक्षणार्थं अनुरुध्य स्वास्थ्यकेन्द्रं प्रति निवेदनं लिखत ।

(ख) स्वस्य ग्रामे व्यञ्जनकृषिविस्ताराय अनुरोद्धं कुर्वन् जनपदकृषिकार्यालयं प्रति पत्रमेकं लिखत ।

(ग) भूक्षयतः पीडितानां जनानां सहयोगाय अनुरोद्धुं ग्रामप्रतिनिधिरूपेण ग्रामपालिकायै निवेदनपत्रमेकं लिखत ।

७. **पाठाधारेण मञ्जूषायां प्रदत्तानि पर्यायपदानि चित्वा लिखत**

यथा– पुरम् - नगरम्

आवासः ................

यथाकालम् - ................

असुरभिः - ................

एकत्रीकरणम् ................

आमयाः ................

वातावरणम् ................

निर्मलम् ................

समूहः ................

**मञ्जूषा**

| |
|---|
| दुर्गन्धः, निवासः, सङ्कलनम्, पर्यावरणम्, निचयः, यथासमयम्, रोगाः, स्वच्छम् |

८. **विपर्ययपदानि परस्परं मेलयत**

| **खण्डः 'क'** | **खण्डः 'ख'** |
|---|---|
| निरामयता | दुर्गन्धः |
| सादरम् | हानिः |
| नगरम् | अनपेक्षितानि |
| सुगन्धः | सामयता |
| लाभः | निरादरम् |
| अपेक्षितानि | ग्रामः |

## व्याकरणानुशीलनम्

१. **मञ्जूषायां प्रदत्तं पूर्वसवर्णसन्धेर्नियममाधृत्य उदाहरणानुसारेण सन्धिं कुरुत**

उदाहरणम्– जगद् + हितम् = जगद्धितम्

(क) तद् + हि = .................. (ख) सुहृद् + हसति = ..................

(ग) षड् + हयाः = .................. (घ) प्राग् + हसनम् = ..................

(ङ) भवद् + हिताय = ..................

**मञ्जूषा**

| ग् ज् ड् द् ब् + ह् = घ्/झ्/ढ्/ध्/भ् |
|---|

२. **अधस्तनेषु वाक्येषु अधिकरणकारकयुतं पदं चित्वा नवीनं वाक्यं रचयत**

यथा– सिंहः वने निवसति।

वने – वने अनेके पशवः भवन्ति।

(क) गौः गोष्ठे निवसति।

(ख) मूषकः बिले निवसति।

(ग) व्याघ्रः गुहायां निवसति।

(घ) घोटकः मन्दुरायां निवसति।

(ङ) भल्लूकः वृक्षेऽपि निवसति।

३. **अधस्तनेषु वाक्येषु प्रयुक्तानि सर्वनामपदानि चिनुत**

(क) वयं विद्यालयं गच्छामः।

(ख) ईश्वरः युष्मभ्यं सद्बुद्धिं यच्छतु।

(ग) युष्मासु तस्य कृपा वर्षतु।

(घ) शिक्षकाः अस्मान् पाठयन्ति ।

(ङ) शिक्षकाः अस्माभिः सह सम्यक् भाषन्ते ।

(च) त्वं मान्यजनैः सह कथं व्यवहरसि ?

(छ) युवां किमर्थं कुमार्गे चलथः ?

(ज) पितरौ अस्मत् सद्व्यवहारं इच्छतः ।

(झ) पितरौ सदैव अस्माकं हितं वाञ्छतः ।

(ञ) युष्माकं कार्यं सफलतां प्राप्नोतु ।

**४. अधस्तनीं तालिकां दृष्ट्वा उपरि वाक्येभ्यः चितानां सर्वनामपदानां शब्द-विभक्ति-वचनानि निर्दिशत**

यथा– (क) वयम् - अस्मत्, प्रथमा विभक्तिः, बहुवचनम्

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| | अस्मत्– | | |
| प्रथमा | अहम् | आवाम् | वयम् |
| द्वितीया | माम् | आवाम् | अस्मान् |
| तृतीया | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थी | मह्यम् | आवाभ्याम् | अस्मभ्यम् |
| पञ्चमी | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | मम | आवयोः | अस्माकम् |
| सप्तमी | मयि | आवयोः | अस्मासु |
| | युष्मत्– | | |
| प्रथमा | त्वम् | युवाम् | यूयम् |
| द्वितीया | त्वाम् | युवाम् | युष्मान् |
| तृतीया | त्वया | युवाभ्याम् | युष्माभिः |
| चतुर्थी | तुभ्यम् | युवाभ्याम् | युष्मभ्यम् |
| पञ्चमी | त्वत् | युवाभ्याम् | युष्मत् |
| षष्ठी | तव | युवयोः | युष्माकम् |
| सप्तमी | त्वयि | युवयोः | युष्मासु |

५. **मञ्जूषायां प्रदत्तं परसवर्णसन्धेर्नियममाधृत्य उदाहरणानुसारेण सन्धिं कुरुत**

उदाहरणम्– अं + कः = अङ्कः

मुं + च = मुञ्च

(क) पं + जरम् = .................. (ख) मं + दिरम् = ..................

(ग) शं + करः = .................. (घ) पिं + डम् = ..................

(ङ) सं + ख्या = ..................

**मञ्जूषा**

| |
|---|
| अनुस्वारः + वर्गीयव्यञ्जनानि = ङ्/ञ्/ण्/न्/म् |

## रचनात्मकः अभ्यासः

१. **पाठाद् गृहीतैः अधोलिखितैः सप्तम्यन्तपदैः नवीनानि वाक्यानि रचयत**

नगरे, चतुष्पथेषु, प्रतीक्षालयेषु, पदमार्गेषु, सार्वजनिकस्थलेषु, जनेषु ।

२. **मञ्जूषायाः साहाय्येन अधस्तनं चित्रम् अष्टभिः वाक्यैः वर्णयत**



यथा– अत्र नगरस्य अवकरसङ्कलनस्य चित्रमस्ति ।

**मञ्जूषा**

| |
|---|
| अवकरवाहनम्, अवकरभाण्डम्, जनाः, नगरम्, अवकरस्यूतः, अवकरकर्मकराः, नगरक्षेत्रम्, स्वच्छम्, स्वच्छताभियानम्, यत्र कुत्रापि, अवकराः, निश्चिते स्थाने, क्षिपन्ति, प्रसन्नाः |

३. **विद्यालयस्य स्वच्छतायै किं किं करणीयमिति विषये कर्गजपट्टे दश वाक्यानि लिखित्वा सूचनपट्टे श्लेषयत ।**

## श्रवणपाठः

महाभारतस्य वनपर्वणि एका कथा सुप्रसिद्धा वर्तते । पाण्डवानां वनवासस्य समयः समाप्तिङ्गच्छन् आसीत् । द्वादशसु वर्षेषु कानिचन एव दिनानि अवशिष्टानि आसन् । एकस्मिन् दिने पाण्डवा एकस्य निर्धनस्य विप्रस्य रक्षणसन्दर्भे वनयात्रया बहु दूरं गताः । सर्वे श्रान्ताः पिपासाकुलाश्च आसन् । युधिष्ठिरस्य आज्ञया नकुल एकं वृक्षमारुह्य अवलोकयामास । वृक्षाद् अवरुह्य स जगाद, "किञ्चिद्दूरे एकस्तादृशो वृक्षोऽवलोक्यते, यो जलसमीपे उत्पद्यते । तत्र केचन बका अपि दृश्यन्ते । अतः तत्र अवश्यं जलं भवेत् ।" युधिष्ठिर आज्ञापयत्, "सपदि गत्वा जलमानय ।"

अनुमानानुरूपमेव तत्र नकुल एकस्य जलाशयस्य निकटे प्राप । पूर्वं स्वस्य पिपासां निराकृत्य भ्रातृणां कृते जलं नेष्यामीति विचार्य नकुलोऽञ्जलिना जलमुत्थापयाञ्चकार । तदानीमेव स कस्यचन वचनं शुश्राव- "अयं जलाशयो मदधीनोऽस्ति । अतो मत्प्रश्नान् समाधायैव जलं पातुं शक्नोसि ।" पिपासाकुलो नकुलस्तद्वचनमपरिगण``य जलं पपौ । पीते जले हि मूर्च्छितः सन् स जलाशयतीरे पपात ।

नकुलो दीर्घकालं यावद् न प्रत्याजगाम । अतः चिन्ताकुलो युधिष्ठिरः सहदेवं प्रैषयत् । स च न प्रत्याजगाम । पुनः स क्रमशोऽर्जुनं भीमञ्च सम्प्रेष्य अन्ते स्वयमपि जगाम । जलाशयतीरे सर्वे भ्रातरो मूर्च्छिता आसन् । अञ्जलिना जलग्रहणकाले युधिष्ठिरोऽपि तदेव वचनं शुश्राव । धैर्यशाली युधिष्ठिरो जलं त्यक्त्वा पूर्वं सर्वान् प्रश्नान् समाधायैव जलं पपौ । यक्षरूपः प्रष्टा धर्मदेव आसीत् । धर्मदेवस्य प्रसादेन सर्वे भ्रातरः चेतनां प्राप्य पुनरुत्थिताः ।

महाभारतस्य प्रसङ्गोऽयं 'यक्षप्रश्नः' इति नाम्ना प्रसिद्धोऽस्ति । तत्रत्यमेकं प्रश्नोत्तरमत्यन्तं प्रसिद्धमस्ति । यक्षः पृच्छति, "जगति किमाश्चर्यम् ?" युधिष्ठिर उत्तरयति–

"अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।

शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतःपरम् ॥"

अष्टमः पाठः

# मेलौली मेला

**पाठप्रवेशः**

जन्मन आरभ्य मृत्युपर्यन्तं क्रियमाणानि कर्माणि अस्माकं संस्कृतिं बोधयन्ति । मानवजीवनस्य संस्करणमेव संस्कृतिः । इयं च परम्परिता भवति । धर्मः संस्कृतेर्मूलमिति निगद्यते । मानवजीवनस्य समुन्नत्यै परिष्काराय वा समाजे प्रचलिता आचारविचारकर्मपरम्परादयः संस्कृतिरूपेण ज्ञायन्ते । अस्माकं संस्कृतौ विभिन्नमतावलम्बिनां विविधधर्मानुयायिनां विभिन्नभूगोलवासिनां विविधभाषाभाषिणां परम्परा, मान्यता च समाहिता अस्ति । अत्र सर्वेषां मतानि स्वीक्रियन्ते । सहायता, समानता, सन्मैत्री, सहकार्यम्, एकता, पारस्परिको विश्वासो नेपालीसंस्कृतेर्मूलम् । अस्या विकासे विविधानां जातीनां, भाषाभाषिणां, धर्मावलम्बिनां च समानं योगदानमस्ति । अत एव अस्माकं संस्कृतिनेपालीसंस्कृतिः इति नाम्ना विख्याता वर्तते ।



अस्माकं संस्कृतिर्मानवानां समुन्नतिः एव न, सर्वेषां प्राणिनां शुभमपि कामयते । अतः एव 'सर्वे भवन्तु सुखिनः' इत्युक्तिः अस्माकं संस्कृतौ प्रचलिता । अस्यां संस्कृतौ मेला, यात्रा, देवपूजनम्, अतिथिसत्कारः, समाजसेवा, दानम्, सत्यम्, न्यायः, परोपकारः, सहनशीलता, क्षमा इत्यादयः उदात्तगुणाः प्राप्यन्ते । अस्माकं देशे प्रतिजाति प्रतिधर्मं स्थानविशेषे च अनेकाः संस्कृतयः सन्ति तथापि तत्र लोककल्याणस्य भावना समानरूपेण विद्यते । संस्कृतिर्गतिशीला भवति । अत्र मानवजीवनस्य शाश्वतपक्षः समाविष्टो भवति । सर्वभूतेषु समभावो विचारे औदार्यम्, कर्मणि लोकहितं च नेपालीसंस्कृतेर्वैशिष्ट्यम् । नेपालस्य पूर्वभागे, मध्यक्षेत्रे, सुदूरपश्चिमे, उपत्यकायां, तराईभूमौ च नेपालीसंस्कृत्या विभिन्नं वैशिष्ट्यं दृश्यते । ताः सर्वाः संस्कृतयो नेपालस्य सम्पदो मन्यन्ते ।

जन्मदेखि मृत्युसम्म गरिने कामहरूले हाम्रो संस्कृतिलाई बुझाउँछन् । मानवजीवनको परिष्कार नै संस्कृति हो । यो परम्परित हुन्छ । धर्म संस्कृतिको मूल हो भनिन्छ । मानव जीवनको समुन्नति वा परिष्कारका लागि समाजमा प्रचलित आचार, विचार, कर्म र परम्पराहरू संस्कृतिका रूपमा रहेका हुन्छन् । हाम्रो संस्कृतिमा विचार भएका, विभिन्न धर्म मान्ने, विभिन्न भूगोलमा बस्ने तथा विभिन्न भाषा बोल्ने मानिसको परम्परा र मान्यताहरू समाविष्ट छन् । यसमा सबैका विचारहरू स्वीकार गरिन्छन् । सहयोग, समानता, असल मित्रता, सहकार्य, एकता र पारस्परिक विश्वास नेपाली संस्कृतिको मूल हो । यसको विकासमा विभिन्न जातजाति, भाषाभाषी र धर्मावलम्बीहरूको बराबर योगदान रहेको छ । त्यसैले हाम्रो संस्कृति नेपाली संस्कृतिका रूपमा प्रसिद्ध छ ।

हाम्रो संस्कृतिले मानिसहरूको समुन्नतिमात्र होइन, सबै प्राणीहरूको भलो चिताएको छ । त्यसैले 'सबै सुखी होऊन्' भन्ने भनाइ हाम्रो संस्कृतिमा प्रचलित छ । यस संस्कृतिमा मेला, जात्रा, देवपूजा, अतिथिसत्कार, समाजसेवा, दान, सत्य, न्याय, परोपकार, सहनशीलता, क्षमा इत्यादि विशिष्ट गुणहरू पाइन्छन् । हाम्रो देशका प्रत्येक जाति, प्रत्येक धर्म र स्थानविशेषका अनेक संस्कृतिहरू छन् तापनि ती सबै संस्कृतिमा लोककल्याणको भावना समान रूपमा पाइन्छ । संस्कृति गतिशील हुन्छ । यसमा मानव जीवनका शाश्वत पक्षहरू समाविष्ट हुन्छन् । सम्पूर्ण प्राणीमा समभाव, विचारमा उदारता र कर्ममा लोकहित नेपाली संस्कृतिको विशेषता नै हो । नेपालको पूर्वभाग, मध्यभाग, सुदूर पश्चिम, उपत्यका र तराईमा नेपाली नेपाली संस्कृतिका भिन्न भिन्न विशेषताहरू देखिन्छन् । ती सबै संस्कृतिहरू नेपालका सम्पदा हुन् ।

## मूलपाठः मेलौली मेला

(लीलानाथः विराटनगरे सपरिवारः तिष्ठति; तत्रैव पठति । तस्य माता देवकला गृहिणी, पिता भानुदत्तः तु सर्वकारस्य कर्मचारी अस्ति । तत्पितामहो हरिदत्तः अपि अत्रैव परिजनैः सह तिष्ठति ।

अद्य शनिवासरः । विद्यालये अवकाशः अस्ति । अतः लीलानाथः दूरदर्शनं अवलोकयन् वर्तते । हरिदत्तोऽपि तत्रैव आगत्य वसति ।)

लीलानाथः पितामह, अद्य दूरदर्शनं ममेच्छया चलति । अद्य मम अवकाशः, ममैव दूरदर्शनम् ।

हरिदत्तः एवम् पौत्र, त्वं यथेच्छं पश्य ।

लीलानाथः भवान् बैतडीजनपदं जिगमिषुः अस्ति इति अहं मातुः मुखात् अशृणवम् । पितामह, किमेतत् सत्यमस्ति ?

हरिदत्तः आम्, त्वमपि मया सह चल । तव पिता अपि मया सह गच्छतु इति मदीया इच्छा परन्तु तव पितुः समयो नास्ति । त्वं गच्छसि किम् ?

लीलानाथः	विद्यालये मम अवकाशो नास्ति । अतोऽहं गन्तुं नशक्नोमि । भवान् गच्छतु । (किञ्चित् स्मृत्वा) पितामह, भवान् सहसा किमर्थं सुदूरपश्चिमम् अस्माकं गृहं गन्तुम् इच्छति ?

हरिदत्तः	कार्तिकशुक्लपक्षः आगच्छन् अस्ति । तस्य चतुर्थीपक्षतः पञ्चमीपक्षपर्यन्तं तत्र मेलौली मेला प्रचलति । तत्र मेलायां सहभागितां जनयितुम् अहं गमिष्यमाणः अस्मि पौत्र ।

लीलानाथः	मेलौली मेला ! (साश्चर्यम्) प्रचलेत् मेला । दूरस्थायां तत्र मेलायां गमने का आवश्यकता ?

हरिदत्तः	सा मेला अस्माकं संस्कृतिरस्ति । संस्कृतिः संस्कारसम्बद्धा भवति । अतः सा सर्वदा पालनीया भवति ।

लीलानाथः	वयमपि संस्कृतिं पालयेम । परन्तु संस्कृत्याः स्वरूपं ज्ञात्वा तत्पालने प्रभावकारिता दृश्यते । अतः मेलौली मेला का ? जनाः कथं मानयन्ति ? इत्यस्मिन् विषये मां श्रावयतु पितामह ।

हरिदत्तः	इदानीं त्वं दूरदर्शनं पश्यन् असि । तदेव पश्य । समाप्ते दूरदर्शननिरीक्षणे मम समक्षं समागच्छ । तदानीं कथयामि । (स्वप्रकोष्ठे गन्तुम् उत्तिष्ठति । लीलानाथः पितामहस्य हस्तं गृहीत्वा पुनः आसने स्थापयति ।)

लीलानाथः	पितामह, दूरदर्शनं न पश्यामि किन्तु मेलौलीमेलाविषये ज्ञातुमिच्छामि । (दूरदर्शनं पिधाय) पश्यतु, दूरदर्शनं पिहितम् । इतः कथ्यताम् का अस्ति मेलौली मेला ?

(अल्पाहाराय पात्रे जलं फलादिकं च गृहीत्वा देवकला प्रविशति ।)

देवकला	पितः, किं पृच्छति भवन्तं मम पुत्रः ? (अल्पाहारं श्वशूराय प्रददाति ।) फलानि भुज्यन्ताम् ।

हरिदत्तः	मेलौलीमेलाविषये पृच्छति मम पौत्रः ।

देवकला	पुत्र, मेलौली मेला सुदूरपश्चिमप्रदेशे निवसतां जनानां महत् सांस्कृतिकं पर्व अस्ति । अतः अस्मिन् विषये तव जिज्ञासा उचिता एव । (पुत्राय फलानि दत्वा) तव पितामहः तव जिज्ञासां समाधत्ते । (गच्छति)

लीलानाथः	मेलौलीमेलाविषये ज्ञातुं मया दूरदर्शनं पिहितम् । इतः अपि न कथयति चेत् अहं कुप्यामि । (क्रुद्धः इव प्रतिभाति)

हरिदत्तः	(ईषत् परिहस्य) इदानीं कोपस्य आवश्यकता नास्ति । शृणु, अहं ब्रवीमि । (पात्रस्थं जलं पीत्वा) बैतडीजनपदस्य अधःस्वराटक्षेत्रे मेलौलीभगवत्याः सुन्दरं मन्दिरं वर्तते । अधित्यकायाः महति चत्वरे शिखरशैल्यां निर्मितमिदं मन्दिरं सुदूरपश्चिमप्रदेशे सुप्रसिद्धमस्ति ।

लीलानाथः तर्हि मेलौली इति भगवत्याः नाम ?

हरिदत्तः एवम् । भगवतीरूपेण जनाः मेलौलीदेव्याः आराधनं पूजनं च कुर्वन्ति । मन्दिरे नियुक्ताः ओभ्काजोशीभट्टादिवंशीयाः देवपूजकाः ब्राह्मणाः प्रत्यहं भगवतीं पूजयन्ति ।

(भानुदत्तस्य प्रवेशः)

भानुदत्तः पौत्रपितामहयोः कस्मिन् विषये वार्ता प्रचलन्ती विद्यते ? (हरिदत्तस्य निकटे वसति)

हरिदत्तः (फलानि खादन्) मेलौलीमेलाविषये पौत्रः जिज्ञासते ।

भानुदत्तः अस्माकं संस्कारस्य संस्कृतेश्च विषये कृता जिज्ञासा समुचिता एव । पुत्र, मेलौलीमेलायाः विषये मत्तः अधिकं तव पितामहः जानाति । पितामहः तत्सर्वं त्वां कथयति । पृच्छ पितामहम् ।

लीलानाथः पितामह, भगवत्याः नाम मेलौली इति कथम् सञ्जातम् ?

हरिदत्तः अस्मिन् प्रसङ्गे एका किंवदन्ती वर्तते ।

लीलानाथः कीदृशी किंवदन्ती ?

हरिदत्तः शृणु, पुरा कश्चन गोपालः स्वकीयाः गाः गोचरणक्षेत्रे चारयति स्म । तासु एका गौः कस्याञ्चन शिलायां प्रत्यहं दुग्धम् अर्पयति स्म । एकदा गोपालः शिलायां दुग्धम् अर्पयन्तीं गाम् अपश्यत् । तन्निकटम् आगतः स तत्र ज्योतिर्मयीं रहस्यमयीं च शिलाम् अपश्यत् । तादृशी दिव्या शिला पवित्रक्षेत्रे स्थापनीया इति विचार्य गोपालसहिताः ग्रामीणाः भारवाहकाय शिलां वोढुम् आदिशन् । शिलां धृत्वा गच्छन्तः भारवाहकाः मार्गे परिश्रान्ताः । ते शिलां भूमौ सन्न्यस्य विश्रामम् अकुर्वन् । विश्रम्य गन्तुकामाः भारवाहकाः शिलाम् उत्थापयितुं प्रयतन्ते परन्तु न शक्नुवन्ति । अतः दिव्यां शिलां तत्रैव परित्यज्य ते सर्वे प्रत्यागच्छन् ।

लीलानाथः पितामह, किमर्थं बलिष्ठा भारवाहकाः शिलाम् उत्थापयितुं न अशक्नुवन् ?

भानुदत्तः पुत्र, सा शिला दिव्या रहस्यमयी च आसीत् । अतः तथा सञ्जातः ।

लीलानाथः ततः किमभवत् पितामह ?

हरिदत्तः एकदा दैवप्रेरणया गोपालः तां शिलाम् अस्मरत् । तां द्रष्टुं स तत्र अगच्छत्, यत्र ते शिलां परित्यज्य गृहम् आगताः आसन् । आश्चर्यम्, तत्र शिला न आसीत् किन्तु तस्मिन् स्थाने स विशालं मेलवृक्षम् अपश्यत् । स ग्रामम् आगत्य ताम् आश्चर्यमयीं वार्तां गाम्रीणान् अश्रावयत् । ग्रामीणाः तत्र गत्वा भगवतीरूपेण मेलस्य वृक्षम् अपूजयन् । इत्येव न, तत्र मन्दिरस्य स्थापनाम् अपि अकुर्वन् । शिलारूपस्था भगवती मेलस्य वृक्षरूपेण प्रकटिता इति तेषां विश्वासः । अतः सा देवी 'मेलौली भगवती' इति नाम्ना प्रसिद्धा ।

लीलानाथः	अहो दैवीशक्तिः ! अद्भुता प्रतीता किंवदन्ती, रुचिरा च ।

(देवकला पुनः प्रविशति, लीलानाथस्य समीपे तिष्ठति च ।)

देवकला	इयं किंवदन्ती मयापि बाल्यकाले श्रुता आसीत् ।

लीलानाथः	पितामह, मेलौलीभगवत्याः प्राकट्यविषये मया ज्ञातः । इतः मेलौली मेला का ? किञ्च तस्या सांस्कृतिकं महत्त्वम् ? एतदपि वदतु ।



हरिदत्तः	मेलौलीमन्दिरस्य परितः क्षेत्रे कार्तिकशुक्लचतुर्थ्यां पञ्चम्यां च द्विदिवसात्मिका मेला प्रचलति । स्थानीयभाषायां तां 'जाँत' इत्युच्यते । विशेषतः नेपालस्य पश्चिमे सुदूरपश्चिमे च क्षेत्रे निवसतां जनानाम् अत्र सङ्घटनं भवति । भारतीयाः श्रद्धालवः अपि मेलौलीभगवत्याः दर्शनाय पूजनाय च अत्र आगत्य मेलाम् अवलोकयन्ति ।

लीलानाथः	जनाः भगवतीं कथं पूजयन्ति ? किं किं कुर्वन्ति पितामह ?

भानुदत्तः	पुत्र, एतत् अहं कथयामि । गतवर्षे अहं मेलौलीमेलायां गतः आसम् । तत्पूर्वमपि सा मेला मया बहुबारं दृष्टा । मेलावसरे जनाः ध्वजं घण्टां त्रिशूलं देवमूर्तिं धार्मिकमहत्त्वस्य सामग्रीं च भगवत्यै समर्पयन्ति ।

हरिदत्तः	ध्वजघण्टादिवस्तूनां समर्पणं मेलायाः आकर्षकः विशिष्टश्च पक्षः वर्तते ।

देवकला	ध्वजादिधार्मिकवस्तूनां समर्पणं किमर्थम् ? (पत्युः मुखं निरीक्ष्य) एतत्तु अहमपि न जानामि ।

हरिदत्तः साधु जिज्ञासितम् । पौत्र, त्वमपि शृणु । ध्वजः, घण्टा, त्रिशूलं च देव्यै अतीव रोचते । अतः भगवतीपरितोषाय तत्प्रियवस्तूनि समर्प्यन्ते । यथा मोदकं प्राप्य अस्माकं पौत्रः लीलानाथः प्रसीदति तदनु मनोयोगेन पितामहनिर्देशं पालयति । (सर्वे हसन्ति)

लीलानाथः पितामह, मेलायामन्यत् किं किं भवति ? तत्सर्वं ज्ञातुमिच्छामि ।

भानुदत्तः पितामहः कथयन् अस्ति पुत्र । त्वं वृथा...

हरिदत्तः (भानुदत्तं मध्ये अवरुध्य) नहि नहि भानुदत्त । पौत्रः स्वजिज्ञासानुसारं प्रश्नान् करोति । कुर्यात् । त्वं मध्ये निषेधं न कुरु ।

देवकला अतः किम् । पुत्र, त्वं यथा मनः करोति तथा प्रश्नान् कुरु ।

लीलानाथः तर्हि वदतु पितामह, मेलायां जनाः अन्यत् किं किं कुर्वन्ति ?

हरिदत्तः मेलायां काष्ठस्तम्भेषु वस्त्रध्वजादिभिः अलङ्कृतः एकः सुन्दरः मण्डपः निर्मीयते । वायुतान्त्रिकः तत्र तिष्ठति । कम्पमानः सः तत्र आगतेभ्यः जनेभ्यः आशीर्वचांसि प्रददाति ।

भानुदत्तः पुत्र, पितामहोक्तं कर्म कार्तिकशुक्लचतुर्थ्यां सम्पद्यते । अस्मिन् एव दिने अन्यत् मनोरञ्जनात्मकं सांस्कृतिकं कर्म सम्पाद्यते ।

लीलानाथः किमस्ति पिता तादृशं कर्म ?

भानुदत्तः तस्मिन् दिने स्थानीयाः युवकाः महिषान् आनयन्ति । तान् अग्रे कृत्वा युवकाः गानं वादनं नर्तनं कुर्वन्ति । तत्र एकत्रिताः जनाः परस्परं हसन्तः क्रीडन्तः रमन्तश्च महिषान् मेलौलीभगवत्याः मन्दिरं प्रापयन्ति । एतद् सर्वं विलोकयितुं सहस्राधिकानां जनानां सङ्घटनं भवति ।

लीलानाथः महिषानां मन्दिरनयने प्रयोजनं किमस्ति ?

देवकला पुत्र, अल्पाहाराय तुभ्यं मया दत्तानि फलानि यथावत् सन्ति । खाद ।

लीलानाथः सम्प्रति क्षुधा नास्ति । मातः, इदानीं फलापेक्षया मेलौलीमेलाप्रसङ्गं मधुरम् अनुभवामि ।

हरिदत्तः एवंरीत्या चतुर्थ्यां मन्दिरं समानीताः महिषाः तद्दिने मन्दिरपरिसरे एव स्थाप्यन्ते । पञ्चम्यां तेषां बलिः भगवत्यै प्रदीयते । पौत्र, यद्यपि पशुबलिः नोचितः इति मन्यते तथापि तत्र परम्परातः एव प्रचलिता बलिप्रथा सम्प्रत्यपि विद्यते ।

भानुदत्तः मेलाविषयकः धार्मिकविश्वासः कीदृशः अस्ति जनसमुदाये इत्यस्मिन् विषये अपि ज्ञातुमिच्छसि पुत्र ?

लीलानाथः इच्छामि पितः । कस्यापि पर्वणः अयं पक्षः ज्ञानाय आवश्यकः महत्त्वपूर्णश्च भवति ।

भानुदत्तः अत्र मेलायाः मेलौलीभगवत्याः च दर्शनाय सुदूरतः जनाः आयान्ति । भगवत्याः दर्शनेन मानसिकी शान्तिः प्राप्यते; मनोरथश्च पूर्णः भवति इति धार्मिक विश्वासेः वर्तते ।

हरिदत्तः विशषतः अत्र आगताः जनाः मनोवाञ्छितं वरं याचन्ते । मनोवाञ्छायां पूर्णतायां पुनः तत्र आगत्य पूर्वकृतप्रतीज्ञानुसारं भगवतीं पूजयन्ति । तदानीं प्रतिज्ञानुसारं अजमहिषध्वजघण्टाद्रव्यादीन् समर्पयन्ति ।

देवकला अभीष्टसिद्धिकामनया मेलायाम् आगतेभ्यः जनेभ्यः आत्मबलप्रदानार्थं तेषां मानसिकं तापं च निवारणार्थं वायुतान्त्रिकाः भवन्ति । तैः दत्तान् अक्षतान् ललाटे धार्यमाणे अभीष्टपूर्णं भवतीति स्थानीयाः वृद्धाः कथयन्ति ।

भानुदत्तः मेलौलीमेलायाः सामाजिकं महत्त्वमपि विशिष्टम् अस्ति । अध्ययनाय जीविकायै च स्वदेशविदेशस्थाः बान्धवाः दूरं गताः परिजनाः मेलायां सहभागितां जनयितुं स्वगृहं प्रत्यागच्छन्ति । विवाहिताः नार्यः पितृगृहं समागच्छन्ति । एतेन पारिवारिकं सामाजिकं च मेलनं सम्भवति । प्रत्येकं गृहेषु स्वादूनि खाद्यान्नानि मिष्ठान्नानि च पच्यन्ते । ग्रामीणाः परस्परं मिष्ठान्नानि विभज्य समागतेभ्यः अतिथिभ्यश्च प्रदाय खादन्ति । सर्वे नवीनानि वस्त्राणि धारयन्ति । जनाः वैमनस्यं परित्यज्य मिथः आत्मीयभावं प्रदर्शयन्ति । उल्लासमयं वातावरणं सर्वत्र अनुभूयते ।

लीलानाथः अहो ! रमणीयमेतत् पर्व !

हरिदत्तः आम् पौत्र, मेलायां मनोरञ्जनस्यापि परम्परा अस्ति । तत्र सम्मिलिताः जनाः प्रथमदिनस्य मध्याह्नतः द्वितीयदिनस्य सायङ्कालपर्यन्तमपि देउडागानं नृत्यं च कुर्वन्ति । तदर्थं यत्र तत्र आबालवृद्धानां समूहः दृश्यते । सर्वे जनाः मोदमानाः दृश्यन्ते ।

भानुदत्तः पुत्र, युवकसमुदाये मेलापरम्परायाः बोधः मेलासम्पादने सक्रियता च भवितव्या । मेलौलीमन्दिरस्य मेलायाश्च अपेक्षितः प्रचारः आवश्यकः अस्ति । समुचिते प्रचारे इयं मेला सुदूरपश्चिमप्रदेशस्य धार्मिकसांस्कृतिकस्थलरूपेण धार्मिकपर्यटनस्थलरूपेण च विकसिता भविष्यति ।

देवकला पुत्र, मेला अस्माकं संस्कृतिः अस्ति तथापि इदानीं तत्र विकृतयः अपि समागताः दृश्यन्ते । तेषां निवारणाय सर्वैः प्रयासो विधेयः ।

लीलानाथः कीदृश्यः विकृतयः मेलायां दृश्यन्ते मातः ?

देवकला मेलायां मनोरञ्जनाय कतिपयाः जनाः मद्यपानं विधाय कोलाहलं जनानां द्रव्यलुण्ठनं च कर्तुं शक्नुवन्ति । मेलायाः मर्यादां परम्परां गौरवं च विस्मृत्य केचन अपराधं

कर्तुं प्रभवन्ति । केचन द्रव्याणाम् अनुचितं व्ययं कुर्वन्तः दृश्यन्ते । इमाः विकृतयः यदा कदा मेलायां दृश्यन्ते ।

लीलानाथः अस्माभिः विकृतिं न्यूनीकृत्य मेलायां समागतानां जनानां सौविध्याय प्रयासः करणीयः । मातः, किं मया साधु उक्तम् ?

भानुदत्तः साधु उक्तम् । संस्कृतिः सर्वजनसुखाय भवति । संस्कृतौ प्रच्छन्नाः विकृतयः दुःखाय भवन्ति । एतदर्थम् अस्माभिः संस्कृतौ विकृतीनां निषेधः करणीयः ।

लीलानाथः मेलौलीमेलाविषये भवद्भ्यः अहं बहुज्ञः अभवम् । भगवत्याः मेलौलीमेलायाश्च दर्शने मनःकरोति । अतः भवता साकं मामपि नयतु पितामह ।

हरिदत्तः तव विद्यालये अवकाशः नास्ति इदानीम् । अतः आगामिनि वर्षे अहं त्वाम् अवश्यं नेष्यामि ।

लीलानाथः सत्यम् !

देवकला सत्यं पुत्र, इतः फलानि खाद । तदनु आवाम् आपणं गच्छाव । खाद्यान्नानि क्रेतव्यानि सन्ति ।

लीलानाथः (यथाशीघ्रम् उत्पीठिकायां स्थापितानि फलानि खादन्) फलैः अल्पाहारः कृतः । इतः आपणं गच्छाव । (मात्रा साकं प्रकोष्ठात् बहिर्गच्छति)

(लीलानाथ विराटनगरमा सपरिवार बस्छन्; त्यहीँ पढ्छन् । उनकी आमा देवकला गृहिणी र बुबा भानुदत्त सरकारी कर्मचारी हुन् । आज शनिबारको दिन । विद्यालयमा बिदा छ, त्यसैले लीलानाथ टिभी हेर्दै छन् । हरिदत्त पनि त्यहीँ आएर बस्छन् ।)

लीलानाथ हजुरबुबा, आज टिभी मेरो इच्छाले चल्छ । आज मेरो बिदाको दिन, मेरो नै टिभी ।

हरिदत्त हुन्छ नाति, तिमी इच्छानुसार हेर ।

लीलानाथ तपाईं बैलडी जिल्ला जान लाग्नुभएको छ भनेर मैले आमाको मुखबाट सुनेँ । हजुरबुबा, के यो सत्य हो ?

हरिदत्तः= हो, तिमी पनि मसँग जाऊ । तिम्रो बुबा पनि मसँग जाऊन् भन्ने मेरो इच्छा छ तर तिम्रो बुबासँग समय छैन । तिमी त जान्छौ कि ?

लीलानाथ विद्यालयमा मेरो बिदा छैन, त्यसैले म जान सक्दिनँ । तपाईं जानुहोस् । (केही सोचेर) हजुरबुबा, तपाईं अचानक किन सुदूरपश्चिम हाम्रो गाउँ जान चाहनुहुन्छ ?

हरिदत्त	कार्तिक शुक्लपक्ष आउँदै छ । त्यसको चतुर्थी पक्षदेखि पञ्चमी पक्षसम्म मेलौली मेला लाग्छ । त्यो मेलामा सहभागी हुन म जान लागेको हुँ नाति ।

लीलानाथ	मेलौली मेला ! (आश्चर्य मान्दै) चलोस् न त मेला । धेरै टाढाको त्यो मेलामा जान आवश्यक छ र ?

हरिदत्त	त्यो मेला हाम्रो संस्कृति हो । संस्कृति संस्कारसँग सम्बन्धित हुने गर्दछ । त्यसैले यसको पालना सधैँ गर्नुपर्छ ।

लीलानाथ	हामी पनि संस्कृतिको पालना गरौँ । संस्कृतिको स्वरूप बुझेर यसको पालना गर्दा प्रभावकारिता देखिन्छ । त्यसैले मेलौली मेला के हो ? कसरी त्यसलाई मानिन्छ ? यो विषयमा मलाई पनि सुनाउनुहोस् न त हजुरबुबा ।

हरिदत्त	अहिले तिमी टिभी हेर्दै छौ । त्यही हेर । टिभी हेरिसकेपछि मसँग आऊ । त्यो बखत म बताउँछु । (आफ्नो कोठामा जान उठ्छन् । लीलानाथ हजुरबुबाको हात समातेर फेरि सोफामै बसाउँछन् ।)

लीलानाथ	हजुरबुबा, म टिभी हेर्दिनँ तर मेलौली मेलाको विषयमा जान्न चाहन्छु । (टिभी बन्द गरेर) हेर्नुहोस् त, टिभी बन्द भयो । अब बताउनुहोस्, मेलौली मेला के हो ?

(खाजाका लागि खानेपानी तथा फलफूलहरू लिएर देवकला प्रवेश गर्दछिन् ।)

देवकला	बुबा, के सोधिरहेका छन् तपाईंलाई मेरो छोराले ? (खाजा ससुरालाई दिन्छिन् ) फल खानुहोस् ।

हरिदत्त	मेलौली मेलाका बारेमा सोध्दै छन् मेरा नातिले ।

देवकला	छोरा, मेलौली मेला सुदूरपश्चिम प्रदेशमा बस्ने मानिसहरूको महान् सांस्कृतिक पर्व हो । त्यसैले यो विषयमा तिम्रो जिज्ञासा उचित छ । (छोरालाई फलहरू दिँदै) तिम्रो जिज्ञासा हजुरबुबाले समाधान गरिहाल्नुहुन्छ नि । (जान्छिन्)

लीलानाथ	मेलौली मेलाको विषयमा जान्नका लागि मैले टिभी पनि बन्द गरेँ। अब पनि बताउनुभएन भने म रिसाउँछु । (रिसाए झैँ देखिन्छ)

हरिदत्त	(अलिअलि हाँस्दै) अहिले रिसाउन आवश्यक छैन । सुन, म भन्छु । (पानी पिउँदै) बैतडी जिल्लाको तल्लो स्वराट क्षेत्रमा मेलौली भगवतीको सुन्दर मन्दिर छ । पहाडको चुचुरोमा रहेको समथर जमिनमा शिखर शैलीमा बनेको यो सुन्दर मन्दिर सुदूरपश्चिम प्रदेशमा प्रसिद्ध छ ।

लीलानाथ	त्यसो भए मेलौली भनेको भगवतीको नाम हो ?

| | |
|---|---|
| हरिदत्त | हो, भगवतीकै रूपमा मानिसहरूले मेलौली देवीको पूजा आराधना गर्दछन् । मन्दिरमा नियुक्त ओझा, जोशी, भट्ट आदि थरका ब्राह्मण पुजारीहरूले प्रत्येक दिन भगवतीको पूजा गर्ने चलन छ । |
| | (भानुदत्तको प्रवेश) |
| भानुदत्त | नाति र हजुरबुबाको के कुराकानी हुँदैछ ? (हरिदत्तको छेउमा बस्छन्) |
| हरिदत्त | (फलहरू खाँदै) मेलौली मेलाको विषयमा नाति जिज्ञासा राख्छन् । |
| भानुदत्त | हाम्रो संस्कार र संस्कृतिका बारेमा गरिएको जिज्ञासा राम्रो हो । छोरा, मेलौली मेलाको बारेमा मभन्दा धेरै तिम्रो हजुरबुबा जान्नुहुन्छ । उहाँले सबै कुरा तिमीलाई बताउनुहुन्छ । सोध हजुरबुबालाई । |
| लीलानाथ | हजुरबुबा, भगवतीको नाम कसरी मेलौली रहन गयो ? |
| हरिदत्त | यसका बारेमा एउटा किंवदन्ती छ । |
| लीलानाथ | कस्तो किंवदन्ती ? |
| हरिदत्त | सुन, धेरै पहिले एउटा गोठालो आफ्ना गाईहरूलाई गौचरनमा लगी चराउँथ्यो । तीमध्ये एउटा गाईले कुनै ढुङ्गामा प्रत्येक दिन दुध चढाउँदो रहेछ । एकदिन गाईले ढुङ्गामा दुध चढाएको गोठालोले देख्यो । त्यसपछि ऊ नजिकमा आयो । उसले चम्किलो रहस्यमय ढुङ्गो देख्यो । त्यस्तो दिव्य ढुङ्गालाई पवित्र क्षेत्रमा स्थापना गर्नुपर्छ भन्ने विचार गरेर गोठालासहितका केही गाउँलेहरूले भरियालाई ढुङ्गा बोक्न आदेश दिए । ढुङ्गा बोकेर हिँडिरहेका भरियाहरू बाटोमा थाके । उनीहरूले ढुङ्गालाई भुइँमा राखेर विश्राम गरे । विश्रामपछि फेरि हिँड्नका लागि भरियाहरूले ढुङ्गा उठाउन प्रयास गरे तर सकेनन् । त्यसैले त्यो दिव्य ढुङ्गालाई त्यहीँ नै छोडेर ती सबै फर्किए । |
| लीलानाथ | हजुरबुबा, किन बलिया भरियाहरूले पनि ढुङ्गा उठाउन सकेनन् ? |
| भानुदत्त | छोरा, त्यो ढुङ्गा दिव्य र रहस्यमय थियो । त्यसैले त्यस्तो भएको हो । |
| लीलानाथ | त्यसपछि के भयो हजुरबुबा ? |
| हरिदत्त | एकदिन दैववशात् गोठालालाई त्यो ढुङ्गाको याद आयो । त्यसैले त्यो त्यहाँ गयो जहाँ उनीहरूले ढुङ्गा छोडेर घर फर्किएका थिए । आश्चर्य ! त्यहाँ ढुङ्गा थिएन त्यो ठाउँमा उसले विशाल मेलको रुख देख्यो । उसले गाउँ फर्किएर त्यो आश्चर्यजनक कुरा गाउँलेलाई सुनायो । गाउँलेहरू त्यहाँ गएर भगवतीको रूपमा मेलको रुखलाई पूजा गरे । यति मात्र होइन, त्यहाँ मन्दिरको स्थापना पनि गरे । ढुङ्गाको रूपमा रहेकी |

| | |
|---|---|
| | भगवती मेलको रुखका रूपमा पुनः प्रकट भइन् भन्ने उनीहरूको विश्वास थियो । त्यसैले ती देवी मेलौली भगवतीको नामले प्रसिद्ध भइन् । |
| लीलानाथ | अहो दैवीशक्ति ! अद्भुत लाग्यो किंवदन्ती र रमाइलो पनि । |
| | (देवकला पुनः प्रवेश गर्छिन् र लीलानाथको छेउमा बस्छिन् ।) |
| देवकला | यो किंवदन्ती मैले पनि बाल्यकालमै सुनेकी थिएँ । |
| लीलानाथ | हजुरबुबा, मेलौली भगवतीको उत्पत्तिका विषयमा मैले बुझेँ । अब मेलौली मेला के हो र त्यसको सांस्कृतिक महत्त्व के छ ? यसबारे पनि भन्नुहोस् न ॥ |
| हरिदत्त | मेलौली मन्दिरको वरिपरिको क्षेत्रमा कार्तिक शुक्ल चतुर्थी र पञ्चमीमा दुई दिन मेला लाग्छ । स्थानीय भाषामा यसलाई जाँत भनिन्छ । विशेष गरी नेपालको पश्चिम तथा सुदूरपश्चिम क्षेत्रमा बस्ने मानिसहरूको यहाँ भिड लाग्ने गर्दछ । भारतीय श्रद्धालुहरू पनि मेलौली भगवतीको दर्शन र पूजनका लागि यहाँ आएर मेलाको अवलोकन गर्दछन् । |
| लीलानाथ | मानिसहरूले भगवतीको कसरी पूजा गर्दछन् ? के के गर्दछन् हजुरबुबा ? |
| भानुदत्त | छोरा, यो कुरा म बताउँछु । पोहोर म मेलौली मेलामा गएको थिएँ । त्योभन्दा अगाडि पनि धेरै पटक मैले मेला हेरको छु । मेलाको बेला मानिसहरूले ध्वजा, घण्टा, त्रिशूल, देवमूर्ति र धार्मिक महत्त्वका सामग्रीहरू भगवतीलाई चढाउँछन् । |
| हरिदत्त | ध्वजा, घण्टा आदि वस्तुहरू चढाउने कुरा मेलाको आकर्षक तथा विशिष्ट पक्ष हो । |
| देवकला | ध्वजा आदि धार्मिक सामग्रीहरू किन चढाइन्छ ? (पतिको मुख हेरेर) यो कुराचाहिँ मलाई पनि थाहा छैन । |
| हरिदत्त | राम्रो जिज्ञासा राख्यौ । नाति, तिमी पनि सुन । ध्वजा, घण्टा र त्रिशूल देवीलाई अत्यन्त मन पर्छ । त्यसैले भगवतीलाई खुसी पार्न उनका प्रिय वस्तुहरू चढाइन्छन् । जसरी लड्डु पाएपछि हाम्रो नाति लीलानाथ खुसी हुन्छन् र मन लगाएर हजुरबुबाले भनेको मान्दछन् । (सबै हाँस्छन्) |
| लीलानाथ | हजुरबुबा, मेलामा अरू के के हुन्छ । ती सबै कुरा जान्न मन छ । |
| भानुदत्त | हजुरबुबा भन्दै हुनुहुन्छ छोरा । तिमी त्यसै... |
| हरिदत्त | (भानुदत्तलाई बिचमै रोकेर) होइन होइन भानुदत्त । नाति आफ्नो जिज्ञासाअनुसार प्रश्न गर्छन् । गरून् न । तिमी बिचमा नरोक । |
| देवकला | हो त अनि । छोरा, तिमीलाई जे जे प्रश्न सोध्न मन लाग्छ, सोध । |

| | |
|---|---|
| लीलानाथ | त्यसो भए भन्नुहोस् हजुरबुबा, मेलामा मानिसहरूले अरू के के गर्दछन् ? |
| हरिदत्त | मेलामा काठका खम्बाहरूमा कपडा तथा ध्वजाहरूले सजाइएको एउटा सुन्दर मण्डप बनाइन्छ। धामी त्यहाँ बस्दछन्। काम्दै गरेका ती धामीले त्यहाँ आएका मानिसहरूलाई आशीर्वाद दिन्छन्। |
| भानुदत्त | छोरा, हजुरबुबाले भन्नुभएको काम कार्तिक शुक्ल चतुर्थीका दिन गरिन्छ। यही दिनमा अरू मनोरञ्जनात्मक सांस्कृतिक काम पनि गरिन्छन्। |
| लीलानाथ | के हो त्यस्तो मनोरञ्जनात्मक काम ? |
| भानुदत्त | त्यो दिन स्थानीय युवाहरूले राँगा ल्याउँछन्। राँगालाई अगाडि लगाएर उनीहरू गाउने, बजाउने र नाच्ने गर्दछन्। त्यहाँ जम्मा भएका मानिसहरू परस्पर हाँस्दै, खेल्दै र रमाउँदै राँगालाई मेलौली भगवतीको मन्दिरमा पुऱ्याउँछन्। यो हेर्न हजारौँ मानिसहरू जम्मा भएका हुन्छन्। |
| लीलानाथ | राँगालाई मन्दिर ल्याउनुको प्रयोजन चाहिँ के हो नि ? |
| देवकला | छोरा, खाजाका लागि मैले तिमीलाई दिएका फलहरू जस्ताको तस्तै छन्। खाऊ। |
| लीलानाथः | अहिले भोक लागेको छैन। आमा, अहिले फलभन्दा मेलौली मेलाको प्रसङ्ग नै मिठो लागिरहेको छ। |
| हरिदत्त | यसरी चतुर्थीमा मन्दिर ल्याइएका राँगालाई त्यो दिन मन्दिर परिसरमै राखिन्छ। पञ्चमीमा त्यसको बलि भगवतीलाई दिइन्छ। नाति, यद्यपि पशुबलि उचित होइन भन्ने मानिन्छ तथापि त्यहाँ परम्परादेखि नै बलिप्रथा चलेको छ। |
| भानुदत्त | मेलासम्बन्धी धार्मिक विश्वास जनसमुदायमा कस्तो छ ? यस विषयमा पनि जान्न मन छ छोरा ? |
| लीलानाथ | मन छ बुबा। कुनै पनि पर्वको यो पक्ष जान्नका लागि आवश्यक र महत्त्वपूर्ण पनि छ। |
| भानुदत्त | यहाँ मेला र मेलौली भगवतीको दर्शन गर्न धेरै टाढाबाट मानिसहरू आउँछन्। भगवतीको दर्शन गर्नाले मानसिक शान्ति पाइने र मनको इच्छा पूरा हुने धार्मिक विश्वास छ। |
| हरिदत्त | विशेष गरी यहाँ आएका मानिसहरू मनले चाहेको वर माग्दछन्। मनको इच्छा पूरा भएपछि फेरि त्यहाँ आएर पहिले गरेको भाकलअनुसार भगवतीको पूजा गर्दछन्। त्यो बेला भाकल गर्दा भनेअनुसार बोका, राँगा, ध्वजा, घण्टा, पैसा आदि कुराहरू चढाउँछन्। |

| | |
|---|---|
| देवकला | अभीष्टसिद्धिको कामना गरी मेलामा आएका मानिसहरूलाई आत्मबल प्रदान गर्न र तिनका मानसिक ताप हरण गर्न धामीहरू तैनाथ भएका हुन्छन् । उनीहरूले दिएको अक्षता निधारमा लगाउनाले अभीष्टसिद्धि हुने कुरा स्थानीय वृद्धहरू बताउँछन् । |
| भानुदत्त | मेलौली मेलाको सामाजिक महत्त्व पनि विशिष्ट छ । अध्ययन र रोजगारीका लागि स्वदेश तथा विदेशमा रहेका दाजुभाइ र टाढा पुगेका परिवारका सदस्यहरू मेलामा सहभागी हुन आफ्नो घर फर्किन्छन् । विवाहित नारीहरू माइत आउँछन् । यसबाट पारिवारिक तथा सामाजिक मेलमिलाप कायम हुने गर्दछ । प्रत्येक घरमा मिठा मिठा परिकार तथा मिष्ठान्नहरू पकाइन्छन् । गाउँलेहरू परस्पर मिष्ठान्नहरू बाँडेर खान्छन्, आएका अतिथिहरूलाई पनि खुवाउँछन् । सबैले नयाँ लुगा लगाउँछन् । वैमनस्य त्यागेर मानिसहरू परस्पर आत्मीयता प्रकट गर्दछन् । सबैतिर वातावरण नै उल्लासमय भएको अनुभव हुन्छ । |
| लीलानाथ | अहो ! रमणीय पर्व पो रहेछ । |
| हरिदत्त | हो नाति, मेलामा मनोरञ्जन गर्ने परम्परा पनि छ । मेलामा जम्मा भएका मानिसहरू पहिलो दिनको मध्याह्नदेखि दोस्रो दिनको बेलुकीसम्म देउडा गाउने र नाच्ने गर्दछन् । त्यसैका लागि बालक, युवा, महिला र वृद्धहरू जम्मा भएका देखिन्छन् । सबै जना प्रसन्न भएका हुन्छन् । |
| भानुदत्तः | छोरा, नयाँ पुस्तामा मेलाको परम्पराका बारेमा चेतना बढाउने र क्रियाशील गराउने काम गर्नुपर्छ । मेलौली मन्दिरको अपेक्षित प्रचार गर्न आवश्यक छ । समुचित प्रचार हुन सके यो मेला सुदूरपश्चिम प्रदेशको धार्मिक, सांस्कृतिक तथा धार्मिक पर्यटनका लागि उपयुक्त थलोका रूपमा विकसित हुने छ । |
| देवकला | छोरा, मेला हाम्रो संस्कृति हो तापनि यसमा अहिले विकृतिहरू आएका देखिन्छन् । तिनीहरूलाई हटाउन सबैले प्रयास गर्नुपर्छ । |
| लीलानाथ | कस्ता विकृतिहरू मेलामा देखिन्छन् आमा ? |
| देवकला | मेलामा मनोरञ्जनका लागि कतिपयले मद्यपान गरेर होहल्ला गर्ने तथा मानिसहरूलाई ठग्ने काम गर्न सक्छन् । मेलाको मर्यादा, परम्परा र गौरव बिर्सिएर कसैले अपराध गर्न सक्छन् । कसैले पैसाको अनुचित खर्च गरिरहेका हुन्छन् । यस्ता विकृतिहरू मेलामा कहिलेकाहीँ देखिन्छन् । |
| लीलानाथ | विकृति घटाएर हामीले मेलामा आएका मानिसहरूको सुविधाका लागि प्रयास गर्नुपर्छ । आमा, मैले भनेको ठिक हो ? |

| | |
|---|---|
| भानुदत्त | ठिक भन्यौ छोरा, संस्कृति सबै मानिसको सुखका लागि हो । संस्कृतिमा लुकेका विकृतिहरू दुःखको कारण बन्न सक्छन् । अतः हामीले संस्कृतिमा देखिएका विकृतिलाई रोक्नुपर्छ । |
| लीलानाथ | मेलौली मेलाको विषयमा तपाईंहरूबाट मैले धेरै बुझेँ । भगवती मेलौली र मेलाको दर्शन गर्न मलाई पनि मन लाग्यो । हजुरबुबा, आफूसँग मलाई पनि लैजानुहोस् । |
| हरिदत्त | अहिले तिम्रो विद्यालयमा बिदा छैन । आउँदो वर्ष म तिमीलाई अवश्य लैजाने छु । |
| लीलानाथ | साँच्चै ! |
| देवकला | साँच्चै हो छोरा, अब तिमी फलहरू खाऊ अनि तिमी र म बजारतिर जाऔँ । खाद्यान्नहरू किन्नुपर्ने छ । |
| लीलानाथ | (टेबलमा राखेका फलहरू छिटो छिटो खाँदै) फलफूलको खाजा खाएँ । अब बजार जाऔँ । (आमासँग कोठाबाट बाहिरिन्छ ।) |

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| सर्वकारः | देशस्य कार्यकारिप्रमुखः | सरकार | Government |
| जिगमिषुः | गन्तुम् इच्छुकः | हिँड्ने इच्छा भएको | Desire of walking |
| अल्पाहारः | ईषद् भोजनम् | खाजा | Snack |
| अधित्यका | शिखरस्था समस्थली | पहाडमाथिको समथर जमिन | Plateau |
| किंवदन्ती | जनश्रुतिः | लोकप्रचलित भनाइ | Saying |
| गोपालः | धेनुपालकः | गोठालो | Herdsman |
| भारवाहकः | भारिकः | भरिया | Porter |
| वोढुम् | धर्तुम् | बोक्न | To carry |
| सन्न्यस्य | भूमौ स्थापयित्वा | राखेर | keeping |
| गन्तुकामाः | गमने उद्यताः | जान इच्छुक | Desire of walking |
| देवप्रेरणा | दैवसंयोगः | दैवसंयोग | Forturately |
| रुचिरा | मधुरा, | सुन्दर, मिठो | Lovely/nice |

| | | | |
|---|---|---|---|
| परितः | इतस्ततः | वरिपरि | Surrounding/Periphery |
| सङ्घटनम् | एकत्रीभवनम् | भिड | Crowd |
| मनोयोगः | सचेततासहितः | दत्तचित्त | Concentration/attention |
| वायुतान्त्रिकः | वायुमन्त्रसाधकः | धामी | Wizard |
| क्षुधा | भक्षणेच्छा | भोक | Hunger |
| सुदूरतः | अतिदूरात् | धेरै टाढाबाट | From very far |
| मनोवाञ्छा | मानसिकी इच्छा | मनको इच्छा | Internal desire |
| परिजनाः | पारिवारिकाः सदस्याः | परिवारका सदस्यहरू | Family members |
| विभज्य | विभागं कृत्वा | बाँडेर | Sharing |
| मिथः | परस्परम् | एकआपसमा | Mutally |
| प्रदाय | दत्वा | दिएर | Giving |
| मोदमानाः | प्रसन्नाः | प्रसन्न | Glad |
| आपणः | विपणिः | बजार | Market |

## अभ्यासः

### श्रवणं भाषणं च

१. **शिक्षकमुखाद् अधः प्रदत्तानि पदानि श्रुत्वा अनूच्चारयत**

अधःस्वराटक्षेत्रे, कस्याञ्चन, ध्वजघण्टादिवस्तूनाम्, तत्प्रियवस्तूनि, सङ्घटनम्, मनोवाञ्छितम्, उल्लासमयम्

२. **उदाहरणम् अनुसृत्य अधस्तनपदानां पदविच्छेदं विधाय श्रावयत**

उदाहरणम् : दूरदर्शननिरीक्षणम् = दूर+दर्शन +निरीक्षणम्

कार्तिकशुक्लपक्षः, देवप्रेरणया, प्राकट्यविषये, भगवतीपरितोषाय, पितामहनिर्देशम्, काष्ठस्तम्भेषु, आदानप्रदानरूपम्, सहस्राधिकानाम्, धार्मिकसांस्कृतिकस्थलरूपेण

३. **पाठस्य प्रथमसंवादतः षष्ठसंवादपर्यन्तं साभिनयं परस्परमनुवाचयत ।**

४. **अधस्तनं संवादाशं कक्षायां श्रुत्वा तत्र आगतानि समस्तपदानि श्रावयत ।**

बैतडीजनपदस्य अधःस्वराटक्षेत्रे मेलौलीभगवत्याः सुन्दरं मन्दिरं वर्तते । अधित्यकायाः महति चत्वरे शिखरशैल्यां निर्मितमिदं मन्दिरं सुदूरपश्चिमप्रदेशे सुप्रसिद्धमस्ति ।

**५. अधस्तनशब्दान् शुद्धमुच्चार्य सखीन् श्रावयत**

गमिष्यमाणः, स्वप्रकोष्ठे, श्वशूराय, मनःकरोति, द्रष्टुम्, अवरुध्य, मनोवाञ्छायाम्, मिष्ठान्नानि, क्रेतव्यानि, यथाशीघ्रम्

**६. शिक्षकात् अधस्तनानुच्छेदं श्रुत्वा प्रदत्तानां प्रश्नानामुत्तरं कथयत**

मेलौलीमेलायाः सामाजिकं महत्त्वमपि विशिष्टम् अस्ति । अध्ययनाय जीविकायै च स्वदेशविदेशस्थाः बान्धवाः दूरं गताः परिजनाः मेलायां सहभागितां जनयितुं स्वगृहं प्रत्यागच्छन्ति । विवाहिताः नार्यः पितृगृहं समागच्छन्ति । एतेन पारिवारिकं सामाजिकं च मेलनं सम्भवति । प्रत्येकं गृहेषु स्वादूनि खाद्यान्नानि मिष्ठान्नानि च पच्यन्ते । ग्रामीणाः परस्परं मिष्ठान्नानि विभज्य समागतेभ्यः अतिथिभ्यश्च प्रदाय खादन्ति । सर्वे नवीनानि वस्त्राणि धारयन्ति । जनाः वैमनस्यं परित्यज्य मिथः आत्मीयभावं प्रदर्शयन्ति । उल्लासमयं वातावरणं सर्वत्र अनुभूयते ।

(क) मेलौलीमेलायाः महत्त्वं कीदृशम् ?

(ख) के के मेलावसरे स्वगृहं प्रत्यागच्छन्ति ?

(ग) मेलावसरे कीदृशं मेलनं सम्भवति ?

(घ) मिष्ठान्नानि कथं खाद्यन्ते ?

(ङ) सर्वत्र उल्लासमयवातावरणस्य कारणं किम् ?

**७. अधस्तनानि पदानि प्रयुज्य एकैकं वाक्यं परस्परं श्रावयत**

ज्ञातुम्, किम्, तादृशीम्, विचार्य, सांस्कृतिकम्, अन्यत्, रमन्तः, बहुज्ञः

**८. अधस्तनमनुच्छेदं सम्यग् उच्चार्य सारांशं वदत**

अनुशिष्टानां छात्राणां जीवनं क्रमशः सफलतोन्मुखं भविष्यति । अनुशासनं तादृशी शक्तिः अस्ति, या मानवस्य नियतिं परिवर्तयते; क्रियासामर्थ्यं वर्धयते । मानवस्य सर्वश्रेष्ठतां गुरुतां च अनुशासनमेव संरक्षति । अस्माकं प्रकृतिः अनुशासनं न त्यजति । चन्द्रसूर्यौ स्वगत्यां सञ्चलन्तौ उदीतः, अस्तञ्च गच्छतः । मानवैः प्रकृत्याः सकाशात् अनुशासनं शिक्षणीयम् । मधुकराः मधुकरराजस्य निर्देशेन रसान् सञ्चिन्वन्ति । पिपीलिकागणः पङ्क्तौ आबद्धः सन् कार्याणि सम्पादयति । अतः अनुशासनात् बहिः कोऽपि गन्तुं नशक्नोति । मनुष्यस्तु विवेकी जीवः वर्तते । अतः एतेन अनुशासनं पालयता रचनात्मकं कार्यं कर्तव्यमेव भवति । नष्टे भ्रष्टे च अनुशासने विकृतीनां घातकाः दुष्प्रभावाः सर्वत्र दृश्यन्ते । तथा सति अस्माकं सामाजिकी मर्यादा मानवतायाः गौरवञ्च धूलीसात् भवति । अतः अनुशासनस्य महत्त्वं ज्ञात्वा छात्रैः स्वस्मिन् नैतिकगुणानां सदाचारस्य च विकासाय प्रयासः कर्तव्यः ।

अनुशासित विद्यार्थीहरूको जीवन क्रमशः सफलतातिर उन्मुख हुन्छ । अनुशासन त्यस्तो शक्ति हो, जसले मानिसको नियति बदल्छ र क्रियासामर्थ्य बढाउँछ । मानिसको सर्वश्रेष्ठता र गुरुतालाई अनुशासनले बचाएको हुन्छ । हाम्रो प्रकृतिले अनुशासनलाई कहिल्यै छोड्दैन । चन्द्र र सूर्य आफ्नै गतिमा चलायमान भई उदाउने र अस्ताउने गर्दछन् । मानिसले प्रकृतिबाट अनुशासन सिक्नुपर्छ । मौरीहरू आफ्नो नेताको निर्देशनअनुसार रससञ्चय गर्दछन् । कमिलाको समूहले पनि पङ्क्तिबद्ध भई काम गर्दछ । त्यसैले अनुशासनभन्दा बाहिर कोही पनि जान सक्दैन । मानिस त विवेकी प्राणी हो । अतः उसले अनुशासनको पालना गर्दै रचनात्मक काम गर्नैपर्ने हुन्छ । अनुशासन नष्टभ्रष्ट भएमा विकृतिका घातक दुष्प्रभावहरू सबैतिर देखिन थाल्छन् । यसो भएमा हाम्रो सामाजिक मर्यादा तथा मानवताको गौरव माटोमा मिल्दछ । त्यसैले अनुशासनको महत्त्व बुझेर विद्यार्थीहरूले आफूमा नैतिक गुण तथा सदाचारको विकासका लागि प्रयास गर्नुपर्छ ।

९. **नेपालीभाषायां चित्रवर्णनं कृत्वा श्रावयत**



१०. **उदाहरणमनुसृत्य शिक्षकस्य च साहाय्येन प्रदत्तानां समस्तशब्दानां विग्रहं वदत ।**

उदाहरणम् : मेलौलीमन्दिरस्य = मेलौल्याः मन्दिरस्य

मेलासम्पादने, मनोवाञ्छितम्, महत्त्वपूर्णः, मेलावसरे, पितामहनिर्देशम्, मेलवृक्षम्, भगवतीरूपेण

११. **प्रदत्तानि वाक्यानि कः कं प्रति उक्तवान् अस्ति ? वदत ।**

(क) तत्पूर्वमपि सा मेला मया बहुबारं दृष्टा ।

(ख) भगवतीपरितोषाय तत्प्रियवस्तूनि समर्प्यन्ते ।

(ग) पुत्र, त्वं यथा मनः करोति तथा प्रश्नान् कुरु ।

(घ) विशषतः अत्र आगताः जनाः मनोवाञ्छितं वरं याचन्ते ।

(ङ) अहो ! रमणीयमेतत् पर्व !

१२. **स्वप्रदेशे प्रचलितं किञ्चन सांस्कृतिकं पर्व वर्णयित्वा शिक्षकं श्रावयत ।**

१३. **संस्कृतिः कथं मानवसमाजे एकतां सम्पादयति ? परस्परं विमृशत ।**

१४. **श्रवणपाठं पठित्वा अधस्तनान् प्रश्नान् उत्तरयत**

(क) आधुनिकसमाजे कीदृशी कल्पना कर्तुं न शक्यते ?

(ख) अस्माकं संस्कृतौ नारीणां किं स्थानम् ?

(ग) नार्यः कथं गृहपरिसरे सीमिता अभवन् ?

(घ) नारीं प्रति समाजस्य द्वैधं चरितं किम् ?

(ङ) नारीपुरुषयोर्मध्ये दृष्टो विभेदः किमर्थं निराकरणीयः ?

(च) नार्यः कदा अधिकारसम्पन्ना मन्यन्ते ?

(छ) 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' इत्युक्तेः तात्पर्यं स्पष्टयत ।

(ज) समाजे दृश्यामानं नारीपुरुषभेदं निर्मूलीकर्तुं विद्यार्थिनः भूमिका कीदृशी भवितव्या ? स्वमतं लिखत ।

(झ) श्रवणपाठं पठित्वा रिक्तस्थानस्य पदानि चिनुत

................ सामाजिकराजनीतिकादि-अधिकारप्राप्तये ............... प्रचलत् अस्ति । समाजः क्रमशः नारीं प्रति .............. भवन् अस्ति । नार्यः इदानीं विविधक्षेत्रेषु संलग्नाः ........... । ता अपि देशविकासाय .............. प्राप्ताः सन्ति । ................ अपगताः । ................. परिवर्तनं जातम् ।

## पठनम्

१. **पाठानुसारं परस्परं मेलयत**

| | |
|---|---|
| वस्तूनि | वार्ता |
| सांस्कृतिकं | पच्यन्ते |
| महत्त्वपूर्णा | कृतः |
| बलिः | समर्प्यन्ते |
| मिष्ठान्नानि | प्रचारः |
| समुचितः | कर्म |
| अल्पाहारः | प्रदीयते |

२. **वाक्यचिह्नविसर्गानुस्वारादीन् विचार्य अधोदत्तं गद्यांशं सस्वरं पठत**

अभीष्टसिद्धिकामनया मेलायाम् आगतेभ्यः जनेभ्यः आत्मबलप्रदानार्थं तेषां मानसिकं तापं च निवारणार्थं वायुतान्त्रिकाः भवन्ति । तैः दत्तान् अक्षतान् ललाटे धार्यमाणे अभीष्टपूर्णं भवतीति स्थानीयाः वृद्धाः कथयन्ति ।

### ३. अधस्तनमनुच्छेदं निरवच्छिन्नं पठत

जलं जीवानां जीवनमस्ति । प्रतिक्षणं वयं पातुं स्नातुं वस्त्राणि क्षालयितुं कृषिकर्म कर्तुं च जलस्यैव उपयोगं कुर्मः । जलसम्पन्नेऽपि नेपाले अधिकांशनागरिकाः पानयोग्यात् स्वच्छजलात् वञ्चिताः सन्ति । विकटेषु ग्रामेषु जनाः जलकलशं गृहीत्वा जलानि आहर्तुं सुदूरस्थानेषु गमनाय विवशाः सन्ति । स्वयम् राजधानी अपि काकाकुलनगरे परिणता अस्ति । जलसमृद्धदेशस्य कृते इदं तथ्यं लज्जास्पदम् । इच्छाशक्तौ सत्यां वयं जलाभावं दूरीकर्तुं शक्नुमः । तदर्थं जलाभावक्षेत्रे जलसञ्चयव्यवस्था कर्तव्या । ततः नलिकामाध्यमेन पेयजलानां स्थाने स्थाने वितरणं कर्तुं शक्यते । स्थलगगनयातायातस्य विकल्पे नदीषु जलयातायातं नौकाविहारं च सञ्चालयितुं शक्यते । पर्वतबहुले नेपालदेशे जलयातायातः सहजः समुचितश्च भवति । जलसम्पद् देशविकासस्य महत् साधनमस्ति । एतस्मात् पर्यटनप्रवर्धने सारल्यं जायते । पर्यटनमाध्यमेन अत्र जनजीविकायाः द्वाराणि उद्घाटितानि भवन्ति । नदीसरोवरादिषु जलाशयेषु जलविहारस्य व्यवस्थां विधाय वैदेशिकमुद्रार्जनं च कर्तुं शक्यते । भूसेचनं, मत्स्यपालनं च विधातुं देशस्य जलसम्पदां अधिकतरः उपयोग कर्तव्यः । इत्थं प्रकृतिप्रदत्तया जलसम्पदा एव नेपालस्य विकासः सम्भवति ।

पानी नै जीवहरूको जीवन हो । प्रतिक्षण हामीहरू पिउन, नुहाउन, कपडा धुन र खेती गर्न पानीको उपयोग गर्छौं । जलले सम्पन्न भए पनि नेपालमा धेरै जनताहरू पिउनका लागि योग्य स्वच्छ पानीबाट वञ्चित छन् । विकट गाउँहरूमा मानिसहरू गाग्रो बोकेर पानी लिन टाढा टाढा जान विवश छन् । स्वयम् राजधानी पनि काकाकुल सहरमा परिणत भएको छ । जलले समृद्ध देशका लागि यो लाजको विषय हो । इच्छाशक्ति भए हामी पानीको अभाव हटाउन सक्छौं । त्यसका लागि पानीको अभाव भएका ठाउँमा जल भण्डारणको व्यवस्था गर्नुपर्छ । त्यसपछि पाइपबाट पिउने पानी ठाउँ ठाउँमा वितरण गर्न सकिन्छ । स्थल र हवाई यातायातको विकल्पमा नदीहरूमा जल यातायात र डुङ्गाविहार सञ्चालन गर्न सकिन्छ । अधिकांश भाग पहाड भएको नेपालमा जल यातायात सहज र समुचित हुन्छ । जलसम्पदा देशविकासको महान् साधन हो । यसबाट पर्यटन प्रवर्धनमा पनि सजिलो हुन जान्छ । पर्यटनद्वारा यहाँ रोजगारीका ढोकाहरू खुल्ने छन् । नदी, तलाउ आदि जलाशयहरूमा जलविहारको व्यवस्था गरेर विदेशी मुद्रा आर्जन गर्न सकिन्छ । भूमिमा सिँचाइ र पाछापालन गरेर देशको जलसम्पदालाको अत्यधिक प्रयोग गर्नुपर्छ । यसरी प्रकृतिले नै दिएको जलसम्पदाबाट नै नेपालको विकास सम्भव हुन्छ ।

### ४. अर्थबोधं कृत्वा परस्परं मेलयित्वा पठत ।

| | |
|---|---|
| अल्पाहाराय | सुवचनम् |
| भगवतीपरितोषाय | पारस्परिकं सम्मानम् |
| अतिथिसत्काराय | फलानि |
| सामाजिकैकतायै | पूजा |
| मनोरञ्जनाय | काष्ठस्तम्भाः |
| मण्डपनिर्माणाय | देउडागानम् |

५. **लीलानाथेन कृताः काश्चन तिस्रः जिज्ञासाः सूचीकुरुत ।**

६. **पाठप्रवेशस्य प्रथमानुच्छेदं मौनं पठित्वा षष्ठ्यन्तपदानि स्वपुस्तिकायां लिखत ।**

७. **चित्रसाहाय्येन प्रदात्तान् प्रश्नान् उत्तरयत**








(क) गोयात्रा कस्यां जातौ प्रचलिता अस्ति ?

(ख) मन्दिरे गत्वा देववन्दना कथं क्रियते ?

(ग) भिक्षुः किं कुर्वन् अस्ति ?

(घ) नमस्कारः किमर्थं क्रियते ?

(ङ) अतिथिसत्कारः कस्य संस्कृतेः विशेषता ?

(च) प्रदत्तचित्राणि कस्मिन् विषये सम्बद्धानि सन्ति ?

## लेखनम्

१. **अधस्तनानां शब्दानां स्वमातृभाषायां संस्कृते च अर्थं लिखत**

अलङ्कृतः, सहसा, किंवदन्ती, रहस्यमयीम्, विश्रम्य, मोदकम्, बहुबारम्, अद्भुता, ग्रमीणाः

२. **'संस्कृतिः संस्कारसम्बद्धा भवति ।' इति गद्यांशस्य भावविस्तारं कुरुत ।**

३. **पाठस्य आधारेण रिक्तस्थानेषु उचितं पदं लिखित्वा वाक्यं पूरयत**

(क) भवान् बैतडीजनपदं ............... अस्ति ।

(ख) स विशालं मेलवृक्षम् ................. ।

(ग) इदानीं ............... आवश्यकता नास्ति

(घ) पौत्रः ........................ प्रश्नान् करोति ।

(ङ) ................... तुभ्यं मया दत्तानि फलानि यथावत् सन्ति ।

४. **अधस्तनानि अव्ययपदानि प्रयुज्य वाक्यनिर्माणं कुरुत**

यथेच्छम्, प्रत्यहम्, वोढुम्, आगत्य, मिथः, ईषत्, अहो, तदानीम्, तथापि, प्रत्येकम्

५. **कोष्ठकात् समुचितं पदम् आदाय रिक्तस्थानं पूरयत**

(क) मेलौलीमन्दिरं ........... जनपदे अस्ति । (कालीकोट, डडेलधुरा, बैतडी)

(ख) शिला ........ वृक्षे परिणता । (विल्ववृक्षे, मेलवृक्षे, निम्बवृक्षे )

(ग) मेलौलीमेला मूलतः ............. प्रसिद्धा अस्ति । (सुदूरपश्चिमे, मध्यपश्चिमे, पश्चिमे)

(घ) भगवत्यै ............. रोचते । (त्रिशूलः, खड्गः, शिला)

(ङ) मेलौलीमेला .............. अस्ति । (एकदिवसात्मिका, द्विदिवसात्मिका, त्रिदिवसात्मिका)

६. **एकवाक्येन उत्तरयत**

(क) लीलानाथः किं कुर्वन् अस्ति ?

(ख) हरिदत्तः कुत्र किमर्थं जिगमिषुः वर्तते ?

(ग) मेलौली मेला कदा प्रचलति ?

(घ) मेलौलीमन्दिरं कुत्र अस्ति ?

(ङ) गोपालः किम् अपश्यत् ?

(च) विश्रामानन्तरं भावरवाहकाः शिलाम् उत्थापयितुं किमर्थं न अशक्नुवन् ?

(छ) गोपालः पुनः कुत्र अगच्छत् ?

(ज) मेलायां विशेषतः कुत्रत्यानां जनानां सङ्घटनं भवति ?

(झ) मेलास्थले कीदृशो मण्डपः निर्मीयते ?

(ञ) वायुतान्त्रिकः किं करोति ?

७. **सङ्क्षिप्तमुत्तरं लिखत**

(क) मेलावसरे जनाः भगवत्यै किं किं समर्पयन्ति ?

(ख) युवकाः कथं मन्दिरप्राङ्गणे महिषान् नयन्ति ?

(ग) मेलौलीभगवत्याः दर्शनेन को लाभः ?

(घ) मेलौलीमेलायाः सांस्कृतिकं महत्त्वं किम् ?

(ङ) जनाः मेलायां कथं मनोरञ्जनं कुर्वन्ति ?

(छ) मेलौलीभगवत्याः मेलायाश्च प्रचारः किमर्थम् आवश्यकः ?

८. **समुचितम् उत्तरमेव स्वपुस्तिकायां लिखत**

(क) कः शिलायां दुग्धम् अर्पयति स्म ?

(अ) गोपालः (आ) ग्रामीणः (इ) गौः (ई) कृषकः

(ख) भारवाहकाः कीदृशाः आसन् ?

(अ) बलिष्ठाः (आ) रोगिणः (इ) वृद्धाः (ई) मूर्खाः

(ग) शिला कुत्र आसीत् ?

(अ) गोचरणक्षेत्रे (आ) मार्गे (इ) ग्रामे (ई) नदीतटे

(घ) मेलौलीमन्दिरं कस्यां शैल्यां निर्मितमस्ति ?

(अ) आधुनिकशैल्याम् (आ) शिखरशैल्याम् (इ) मुगलशैल्याम् (ई) प्यागोडाशैल्याम्

(ङ) मेलौलीमेलायां मनोरञ्जनाय किं गानं गीयते ?

(अ) देउडागानम् (आ) दोहोरीगानम् (इ) राष्ट्रगानम् (ई) भजनगानम्

९. **'संस्कृतिः अस्माकं परिचायिका वर्तते ।' इदं कथनं पाठाधारेण व्याख्यायत ।**

१०. **संस्कृतिविकृत्योर्भेदं विलिख्य विकृतिनिराकरणाय उपायद्वयं लिखत ।**

११. **हरिदत्तप्रोक्तायाः किंवदन्त्याः अनुलेखनं कुरुत ।**

१२. **उदाहरणमनुसृत्य शब्दसमूहात् पर्यायवाचिपदानि एकत्र लिखत ।**

उदाहरणम् : गौः = धेनुः

गौः देवालयः ज्ञातुम् धेनुः वृक्षः अतिथिः पुत्रः

मन्दिरम् तरुः दुग्धम् वेदितुम् मिथः अभ्यागतः प्रस्थरः

प्रकटिता आत्मजः पतिः परस्परम् पयः उत्पन्ना धवः

परिष्कृतः शिला शुद्धः

१३. **अधस्तनानां पदानानां विपर्ययवाचिपदानि लिखत**

विकृतिः, अधः, नगरम्, स्वदेशः, शीतलम्, प्रेम, शान्तः, क्रुद्धः

१४. **मेलौलीमेलायाः सांस्कृतिकं सामाजिकं मनोरञ्जनात्मकं च पक्षं पृथक् सूचीकृत्य वाक्यांशे लिखत ।**

१५. **अधस्तनम् अनुच्छेदं पठित्वा सारांशं लिखत ।**



ज्ञानेन अनुभवेन च परिपक्वतां गताः वृद्धाः सर्वेषां कृते आदरणीयाः भवन्ति । जीवनस्य उत्तरवयसि प्राप्ता एते ज्येष्ठनागरिकाः कथ्यन्ते । मानवदेहे स्वभावतः एव बाल्यतारुण्यवार्धक्यदिरूपाः अवस्थाः दृश्यन्ते । वृद्धावस्था प्रौढतां जनयति । एषा जीवनस्य अन्तिमावस्था अस्ति । अस्माकं देशे सन्ततयः वृद्धान् अभिभावकान् संरक्षन्ति पालयन्ति तीर्थाटनादीनि कारयन्ति च । वृद्धाः शारीरिकरूपेण मानसिकरूपेण च दुर्बलाः भवन्ति । अतः ते गार्हस्थ्यकर्मणः अवकाशं गृहीत्वा सानन्दं परिजनैः सह स्थातुं वाञ्छन्ति । वार्धक्ये रोगशोकनैराश्यादिसमस्याः समागन्तुं शक्नुवन्ति । अतः वृद्धानां कृते परिजनानां सेवा सहयोगः आत्मीयव्यवहारश्च नितराम् आवश्यका भवन्ति । विश्वस्य केषुचन देशेषु वृद्धानां सेवायै

सर्वकारेणैव व्यवस्था विहिता दृश्यते । विविधक्षेत्रेषु पारङ्गताः एते स्वानुभवं स्वज्ञानं स्वशिल्पं च सन्तत्यै दातुं प्रयतन्ते । तेषां ज्ञानानुभवशिल्पादयः सन्ततिभ्यः एव न, समाजाय राष्ट्राय च उपयोगिनः मन्यन्ते । तेषां अनुभवः अस्माकं कृते मार्गद्रष्टा भवितुं शक्नोति । अतः वयसा सह ज्ञानेनापि वृद्धानां एतेषां ज्येष्ठनागरिकाणां मनोभावस्य सम्मानं सर्वैः करणीयम् ।

ज्ञान र अनुभवले परिपक्व भएका वृद्धहरू सबैका लागि आदरणीय हुन्छन् । जीवनको उत्तरकालीन उमेरमा पुगेका वृद्धहरूलाई ज्येष्ठ नागरिक भनिन्छ । मानव शरीरमा स्वाभाविक रूपले बाल्य, तारुण्य र वार्धक्य जस्ता अवस्थाहरू देखिन्छन् । वृद्धावस्थाले प्रौढता जनाउँछ । यो जीवनको अन्तिम अवस्था पनि हो । हाम्रो देशमा सन्तानले नै वृद्ध अभिभावकको संरक्षण र परिपालन गर्ने तथा तीर्थ घुमाउने गर्दछन् । वृद्धहरू शारीरिक र मानसिक रूपमा अत्यन्त दुर्बल हुन्छन् । त्यसैले उनीहरू गृहस्थ जीवनका कामबाट बिदा लिई आनन्दपूर्वक परिवारका सदस्यसँग बस्न चाहन्छन् । वृद्धावस्थामा रोग, शोक, नैराश्य जस्ता समस्याहरू पनि आउन सक्छन् । त्यसैले वृद्धहरूलाई परिवारको सहयोग र आत्मीय व्यवहारको आवश्यकता हुन्छ । विश्वका केही देशमा वृद्धहरूको सेवाका लागि सरकारले नै व्यवस्था गरिदिएको छ । विभिन्न क्षेत्रमा काम गरेर पारङ्गत भएका यिनीहरू आफ्नो ज्ञान, अनुभव र सिप सन्तानलाई दिन कोसिस गर्दछन् । उनीहरूको ज्ञान, अनुभव र सिप सन्तानका लागि मात्र होइन, समाज र देशकै लागि उपयोगी मानिन्छ । उनीहरूको अनुभव हाम्रा लागि मार्गदर्शक बन्न सक्छ । त्यसैले उमेरसँगै ज्ञानले पनि वृद्ध भएका यस्ता ज्येष्ठ नागरिकको सम्मान हामी सबैले गर्नुपर्छ ।

## व्याकरणानुशीलनम्

### १. लोट्लकारः

त्वं पाठं पठ । भवान् पुस्तकानि नयतु । अहमपि गृहकार्यं करवाणि । यूयं वृथा न हसत । ते क्रीडनाय गच्छन्तु । वयं हिमालं पश्याम ।

उक्तवाक्येषु क्रियायां लोट्लकारस्य प्रयोगः अस्ति । लोट् च, आशिषि लिङ्लोटौ इति पाणीनीयसूत्रद्वयानुसारं लोट् लकारस्य प्रयोगः विधि-निमन्त्रण-आमन्त्रण-सत्कार पूर्वकव्यापार-संप्रश्न-प्रार्थनरूपार्थे भवति । एवञ्च आशीर्वादार्थेऽपि लोट्लकारस्यैव प्रयोगो भवति । प्रायः विध्यर्थे लोट्लकारस्य प्रयोगः क्रियते । कार्यसम्पादनाय आज्ञाकरणं विधिः इत्युच्यते । यां क्रियां श्रुत्वा जनः कर्मणि प्रवर्तते, तादृशी क्रिया विधिरूपा भवति । यथा त्वं फलानि खाद इति वाक्ये समगता 'खाद' इति क्रिया कर्तारं खादनकर्मणि प्रेरयति ।

लोट्लकारस्य सर्वाणि रूपाणि इत्थं प्रदर्शयितुं शक्यन्ते-

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | तिष्ठतु | तिष्ठताम् | तिष्ठन्तु |

| | | | |
|---|---|---|---|
| द्वितीयः पुरुषः | तिष्ठ | तिष्ठतम् | तिष्ठतुत |
| तृतीयः पुरुषः | तिष्ठानि | तिष्ठाव | तिष्ठाम |

(क) शिक्षकस्य साहाय्येन अधोनिर्दिष्टधातूनां प्रयोगं कृत्वा लोट्लकारस्य सर्वाणि रूपाणि लिखत ।

श्रु, स्मृ, पच्, फल्, अर्च्, चल्, भ्रम्

२. **अधोनिर्दिष्टवाक्यानि लोट्लकारे परिवर्तयत ।**

(क) राधिका सर्वं वृत्तान्तं वदति । (ख) युवां देवं भजथः ।

(ग) भवान् पुष्पाणि रक्षति । (घ) चौरः धनानि हरति ।

(ङ) वयं जलं पिबामः ।

३. **अधोलिखितानि उदाहरणानि पठत**

| सन्धेः पूर्वम् | पूर्वरूपसन्धेः अनन्तरम् |
|---|---|
| शुद्धः अस्मि | शुद्धोऽस्मि |
| अनुजः अधीते | अनुजोऽधीते |
| छात्रः अयम् | छात्रोऽयम् |

शुद्धः अस्मि, अनुजः अधीते, छात्रः अयम् इत्यत्र शुद्धोऽस्मि, अनुजोऽधीते, छात्रोऽयम् इत्येवंरूपः प्रयोगः कृतो दृश्यते । अयमेव उत्वपूर्वरूपसन्धिः ।

ह्रस्व-अकारान्तपदात् परवर्तिनः पदस्य आदिवर्णः ह्रस्व-अकारः अस्ति चेत् तयोर्मध्ये उत्वपूर्वरूपसन्धिः भवति । यथा 'शुद्धः अस्मि' इत्यत्र 'शुद्धस्+अस्मि' इति पदयोः प्राथमिकी अवस्था । अत्र पदान्तसकारस्य स्थाने (रु) उकारादेशः (ससजुषो रुः इति पाणीनिसूत्रेण) । तथा सति 'शुद्ध+उ+अस्मि' इति जातम् । ततः 'शुद्ध+उ' इत्यत्र गुणसन्धितया पूर्वपरवर्णयोः स्थाने ओकारादेशे 'शुद्धो+अस्मि' इति जातम् । एवञ्च 'एङः पदान्तादति' इति पाणीनीयसूत्रानुसारम् पदान्त-ओकारात् अवर्णपरे पूर्वरूपसन्धिः भवति । परवर्ति-अकारः पूर्ववर्ति-ओकारे एकरूपतां प्राप्नोति इति पूर्वरूपस्य तात्पर्यम् । तदनुसारं 'शुद्धो+अस्मि' इत्यत्र पूर्वरूपसन्धौ क्रियमाणे 'शुद्धोऽस्मि' इति रूपं भवति । ऽ इति चिह्नं पूर्वरूपसन्धिबोधकः, एतेन चिह्नेन अकारस्य बोधो भवति । पूर्वरूपम् अन्यत्रापि तथैव बोद्धव्यम् । उत्वपूर्वरूपसन्धिप्रक्रियां सूत्ररूपेण इत्थं प्रदर्शयितुम् शक्यते -

अस् + अ (शुद्धस्+अस्मि) अ + रु + अ (शुद्ध+उ+अस्मि)

ओ + अ (शुद्धो+अस्मि) ओऽ (शुद्धोऽस्मि)

(क) अधस्तनप्रयोगाणाम् उत्वपूर्वरूपसन्धिगतानि रूपाणि लिखत

रामः अपि, प्रयोगः अत्र, बुद्धः अस्मि, देवः अर्च्यः, सम्पन्नः अयम्, श्यामः अगच्छत्, प्रथमः अध्यायः, मनः अभिलषितः, यशः अभिलाषी

(ख) संवादे उत्वपूर्वरूपसन्धिविहितान् शब्दान् अन्विष्य लिखत

## ३. विसर्गस्य (ः) लोपनियमः

राम आगच्छति, विद्यार्थिन इह विद्यन्ते, स पठति, गायका गायन्ति । राम, विद्यार्थिन, स, गायका इत्यत्र प्रत्येकं पदेषु विसर्गः आवश्यकः किन्तु तत्र नास्ति । तर्हि तानि पदानि अशुद्धानि ? न, तानि पदानि अशुद्धानि न सन्ति । तर्हि अत्र जिज्ञासा भवति यत्, विसर्गः (ः) कुत्र गतः ? अत्र विसर्गसन्धिनियमानुसारं विसर्गस्य लोपः जातः ।

सन्धिप्रक्रियायां विसर्गलोपस्य अनेके नियमाः सन्ति । तेषु केचन नियमाः अधः प्रस्तूयन्ते -

नियमः १. सः/एषः इति पूर्वपदमस्ति, परवर्तिपदस्य प्रथमः वर्णः अकारभिन्नः अस्ति चेत् तत्र विसर्गलोपः भविति । यथा :

सः + आयाति = स आयाति    सः + एति =स एति

सः + पठति =स पठति    एषः + देवः = एष देवः

एषः + वदति = एष वदति

नियमः २. अकारान्तपदस्थात् विसर्गात् परवर्तिनि स्थाने अकारभिन्नः स्वरवर्णः अस्ति चेत् तत्र विसर्गलोपो भवति । यथा :

अर्जुनः + उवाच = अर्जुन उवाच    अतः + एव =अत एव

वृक्षः + एधते =वृक्ष एधते

नियमः ३. विसर्गस्य पूर्ववर्णः आकारोऽस्ति तथा परवर्तिपदस्य प्रथमवर्णः स्वरवर्णः (अ,आ,इ,ई,उ,ऊ, ऋ,ए,ओ,ऐ,औ) तृतीय (गजडदब)चतुर्थ (घझढधभ) पञ्चम (ङञणनम) वर्णाः तथा य,र,ल,व वर्णाः सन्ति चेत् विसर्गलोपो भवति । यथा :

बालिकाः नमन्ति = बालिका नमन्ति

भक्ताः भजन्ति = भक्ता भजन्ति

पुरुषाः हसन्ति = पुरुषा हसन्ति

अश्वाः धावन्ति = अश्वा धावन्ति

(क) प्रदत्तप्रयोगानां विसर्गलोपसन्धिगतानि रूपाणि लिखत ।

एषः जयति, सः चलति, सूर्यः उदेति, देवाः इह, भारवाहकाः विश्रमन्ति, लेखकाः लिखन्ति

(ख) संवादे विसर्गलोपसन्धिविहितान् शब्दान् अन्विष्य लिखत ।

## रचनात्मकः अभ्यासः

१. 'स्वास्थ्यसंरक्षणाय शाकाहारः' इति विषये एकमनुच्छेदं लिखत ।

२. अधस्तनानि वाक्यांशानि आधारीकृत्य प्राविधिकशिक्षायाः वर्णनं कुरुत

- वैज्ञानिकविधिसम्मता प्राविधिकशिक्षा
- भौतिकसमुन्नतये निर्माणादिकार्यसम्पादनाय उपयोगिनी
- कार्यदक्षतायाः अभिवृद्धये यान्त्रिकसाधनानां निर्माणाय वैद्युतवस्तुसञ्चालनाय आवश्यकी
- वैज्ञानिकसिद्धान्तानां व्यावहारिकप्रयोगे केन्द्रिता
- व्यक्तिनिष्ठयाः रचनात्मकप्रतिभायाः प्रकटीकरणे सहयोगिनी
- द्रव्यार्जनमाध्यमेन आत्मनिर्भरताविकासाय विकसिता आधुनिकशिक्षा
- व्यक्तेः समाजस्य देशस्य च विकासाय सर्वैः अङ्गीकृता शिक्षा

३. 'नारीशिक्षा' इतिविषये नातिदीर्घं संवादं लिखत ।

### श्रवणपाठः

नारीसमुदाये कृतो विभेदः पत्रपत्रिकायां दृश्यते श्रूयते च । आधुनिकसमाजे विभेदोऽयं कल्पितुमपि न शक्यते । समाजे नारीणां सम्मानस्य सुरक्षायाश्च विषयेऽस्माकं संस्कृतिः सचेष्टा दृश्यते । अस्माकं संविधानेन अपि समानाधिकारः प्रदत्तोऽस्ति परन्तु व्यवहारे विभेदो दृश्यते । मातृदेवो भव, नास्ति मातृसमो गुरुः इत्यादिवचनात् ज्ञायते यत्, प्राचीनकालेऽस्माकं समाजे नार्यः सम्मानिता आसन् । धर्मशास्त्राणि तु देवत्वदृष्ट्या नारीं प्रशंसन्ति । नारीणां मातृत्वेन वैदुष्येन, वीरत्वेन च अस्माकं प्राचीनवाङ्मयानि पावनानि अभवन् । परिवर्तिते समाजे नारीशक्तिं प्रति समाजोऽसहिष्णुः अभवत् । तासां सामर्थ्यवैदुष्यादयः सङ्कुचीकृताः । शनैः शनैः समाजः पितृसत्तात्मकोऽभवत् । नार्यः गृहपरिसरे सीमिताः अभवन् । अयं दुःखस्य विषयो वर्तते यत्, वर्तमाने अत्याधुनिकयुगेऽपि तादृशः समाजः लभ्यते, यत्र नार्योऽधिकारविहीनाः पुरुषपरतन्त्राः सन्ति । पुरुषवादी समाजः नारीसमुदायं प्रति शासक इव प्रस्तुतो भवति । स्वयम् नार्यः नारीं प्रति अनुदारा दृश्यन्ते । नारीं प्रति अस्माकं समाजस्य द्वैधं चरितं दृश्यते । समाजः शक्तिस्वरूपेण नारीं सम्मानयति चेत् अपरत्र ताः एव अबला मनुते । समाजस्य अयं विरोधाभासपूर्णव्यवहारो नारीणां समुन्नतिं बाधते । समाजोन्नतौ पुरुष इव नार्योऽपि समर्थाः अपेक्ष्यन्ते । तासां सक्षमता आवश्यकी भवति । तदर्थं नरनारीणां मध्ये दृश्टः विभेदः समूलः निराकरणीयः भवति । इदानीं महिलासशक्तीकरणार्थं कार्यक्रमाः सञ्चाल्यन्ते । नारीस्वतन्त्रतायै सामाजिकराजनीतिकादि-अधिकारप्राप्तये आन्दोलनं प्रचलत् अस्ति । समाजः क्रमशः नारीं प्रति समुदारः भवन् अस्ति । नार्यः इदानीं विविधक्षेत्रेषु संलग्नाः सन्ति । ता अपि देशविकासाय नेतृत्वपङ्क्तौ प्राप्ताः सन्ति । नारीसम्बद्धकुप्रथाः अपगताः । विभेदधारणायां परिवर्तनं जातम् । परन्तु यावत्पर्यन्तं नारीपुरुषयोर्मध्ये व्यवहारे समानता न दृश्यते, तावत्पर्यन्तं पुरुष इव नार्योऽधिकारसम्पन्ना जाता इति मन्तुं न शक्यते ।

नवमः पाठः

# सङ्खुवासभा

## पाठप्रवेशः

चन्द्रमाध्यमिकविद्यालयः सुनसरीमण्डलस्य धराननगरे अस्ति। नवम्याः कक्षायाः छात्राः शीतकालीनावकाशे भ्रमणार्थं बसयानेन गच्छन्तः सन्ति । बसयानं सङ्खुवासभामण्डलं प्रति चलत् अस्ति । बसयाने पञ्चविंशतिः छात्राः परस्परं वार्तालापं कुर्वन्तः सन्ति। तेषु मध्ये धनमाया गुरुङः, कैलाशः राई, सुधा लिम्बू, महेन्द्रः ठाकुर च नेपालस्य भूगोलविषये चर्चां कुर्वन्ति ।

धनमाया भो मित्राणि ! यूयं किं मन्यध्वम् ? नेपालो भौगोलिकदृष्ट्या कीदृशो देशो वर्तते ?

कैलाशः अहन्तु अतीव सुन्दरः, सम्पन्नश्च देशोऽस्तीति मन्ये। यतो बहुसङ्ख्यकाः पर्यटका अस्माकं देशस्य बहुविधानि स्थलानि पर्यटितुं प्रतिवर्षमागच्छन्ति ।

सुधा अहमपि तथा मन्ये। नेपालस्य भौगोलिकी अवस्थितिः कीदृशीति तु वयं सर्वे जानीम एव।

महेन्द्रः एसियामहादेशस्य दक्षिणभागे चीनभारतयोर्मध्ये स्थितो नेपालः २६ ̊२२' उत्तराक्षांशतः ३० ̊२७' उत्तराक्षांशपर्यन्तम्, ८० ̊४' पूर्वदेशान्तरात् ८० ̊१२' पूर्वदेशान्तरपर्यन्तं विस्तृतोऽस्ति। अतस्त्रिषु हिमालयपर्वततराईक्षेत्रेषु विभक्तोऽयं देशः कथं न मनोहरः ?

धनमाया विश्वस्य सर्वोच्चहिमालयेन सगरमाथानामधेयेन हिमालयेन विराजितो देशः समस्तान् मानवान् स्वाभिमानपूर्वकं जीवनं यापयितुं शिक्षयति। उत्तरस्यां दिशि स्थिताः हिमालयाः स्मितं विहस्य स्थिताः सन्ति। तस्मात् कारणाद् रमणीयो नेपालः स्वर्ग इव प्रतिभाति ।

महेन्द्रः १,४७,१८१ वर्गकिलोमिटरक्षेत्रफले समाहिताया अस्या भूम्याः पूर्वभूभागात् पश्चिमभूभागपर्यन्तं सामान्यतया ८८५ किलोमिटरपरिमितं लम्बनं विद्यते चेत् उत्तरभूभागाद् दक्षिणभूभागपर्यन्तं १९३ किलोमिटरपरिमितो विस्तारोऽस्ति ।

सुधा साधु उक्तं त्वया । संसारस्य देशेषु नवतितमे विशालेऽस्मिन् देशे सामुद्रिकस्तरात् ५९ मिटरतः ८,८४८ मिटरपर्यन्तम् उच्चता प्राप्यते ।

कैलाशः अस्माकं देशस्य पूर्वदक्षिणपश्चिमेषु भूभागेषु भारतस्य, उत्तरभूभागे च चीनदेशस्य अवस्थितिरस्ति ।

महेन्द्रः सत्यमुक्तम्। सामुद्रिकस्तरात् २,७०० मिटरतः ८,८४८ मिटरपर्यन्तमुच्चता हिमालयक्षेत्रे वर्तते । तच्च देशस्य १५ प्रतिशतं भूभागे स्थितमस्ति ।

धनमाया आम्, पर्वतक्षेत्रे तु सामुद्रिकस्तरात् ६१० मिटरतः २७०० मिटरपर्यन्तमुच्चता अस्ति । अस्मिन् क्षेत्रे देशस्य ६८ प्रतिशतं भूभागोऽस्ति ।

कैलाशः	एवम्, तराईक्षेत्रे तु सामुद्रिकस्तरात् ५९ मिटरतः ६१० मिटरपर्यन्तमुच्चता प्राप्यते। एतत् क्षेत्रं १७ प्रतिशतं भूभागे विस्तृतमस्ति।

सुधा	मित्राणि ! अस्माकं बसयानम् अधुना सङ्खुवासभामण्डलस्य मार्गे चलत् अस्ति। पश्यत बहिः सुरम्याः पर्वताः स्वकक्षे वृक्षान् संस्थाप्य शीतलसमीरस्पर्शेन आनन्दिता इव दृश्यन्ते। सर्वत्र विराजिता हरितिमा अस्माकं मनांसि आह्लादयति।

कैलाशः	आम्, मुदितां प्रकृतिं विलोक्य को न मोदते ? अहमपि काव्येषु वर्णितमिव अन्यतमं स्वर्गं सङ्खुवासभामण्डलपरिसरं पश्यन्नस्मि। पश्यत एतत्।

(सर्वे बसयानस्य गवाक्षाद् बहिः पश्यन्ति।)

चन्द्र माध्यमिक विद्यालय सुनसरी जिल्लाको धरान सहरमा छ। नौ कक्षाका विद्यार्थीहरू जाडो बिदाको समयमा घुम्नका लागि बसबाट जाँदै छन्। बस सङ्खुवासभा जिल्लातर्फ जाँदै छ। बसमा पच्चिस जना विद्यार्थी आपसमा कुराकानी गर्दै छन्। तीमध्ये धनमाया गुरुङ, कैलाश राई, सुधा लिम्बू र महेन्द्र ठाकुर नेपालको भूगोलको विषयमा चर्चा गर्दछन्।

धनमाया	ए साथीहरू ! तिमीहरू के सोच्छौ ? नेपाल भौगोलिक दृष्टिकोणले कस्तो देश हो ?

कैलाश	म त अत्यन्त सुन्दर र सम्पन्न देश हो यो भन्ने सोच्छु। किनकि धेरै सङ्ख्यामा पर्यटकहरू हाम्रो देशका विभिन्न ठाउँ घुम्न प्रत्येक वर्ष आउने गर्दछन्।

सुधा	मलाई पनि त्यस्तै लाग्छ। नेपालको भौगोलिक अवस्था कस्तो छ भन्ने त हामी सबै जान्दछौँ नै।

महेन्द्र	एसिया महादेशको दक्षिणतर्फ चीन र भारतको बिचमा रहेको नेपाल २६ ˚२२' उत्तरी अक्षांशबाट ३० ˚२७' उत्तरी अक्षांशसम्म, ८० ˚४' पूर्वी देशान्तरबाट ८० ˚१२' पूर्वी देशान्तरसम्म फैलिएको छ। त्यसैले हिमाल, पहाड र तराई गरी तीन क्षेत्रमा बाँडिएको यो देश कसरी मनोहर हुँदैन ?

धनमाया	विश्वको सबैभन्दा अग्लो सगरमाथा हिमालले विराजित यो देश समस्त मानवलाई स्वाभिमानपूर्वक जीवन बिताउन सिकाउँछ। उत्तर दिशामा रहेका हिमालहरू मुसुक्क हाँसेर बसेका छन्। त्यसकारण रमाइलो नेपाल स्वर्गभैँ लाग्छ।

महेन्द्र	१,४७,१८१ वर्गकिलोमिटर क्षेत्रफलमा समेटिएको यस धर्तीको पूर्वदेखि पश्चिमसम्म करिब ८८५ किलोमिटर लम्बाइ छ भने उत्तरबाट दक्षिणसम्म १९३ किलोमिटर चौडाइ रहेको छ।

सुधा	ठिक भन्यौ तिमीले। संसारका देशहरूमध्ये नब्बेऔँ ठुलो यस देशमा समुद्री सतहबाट ५९ मिटरदेखि ८,८४८ मिटरसम्मको उचाइ भेटिन्छ।

कैलाश	हाम्रो देशको पूर्व, दक्षिण र पश्चिमतर्फ भारत छ भने उत्तरतर्फ चीन छ।

महेन्द्र — ठिक भन्यौ । समुद्री सतहबाट २,७०० मिटरदेखि ८,८४८ मिटरसम्म उचाइ हिमाली क्षेत्रमा छ । यो क्षेत्र देशको १५ प्रतिशत भूभागमा रहेको छ ।

धनमाया — अँ, पहाडी क्षेत्रमा चाहिँ समुद्री सतहबाट ६१० मिटरदेखि २७०० मिटरसम्म उचाइ छ । यस क्षेत्रमा देशको ६८ प्रतिशत भूभाग छ ।

कैलाश — यस्तै तराईक्षेत्रमा चाहिं समुद्री सतहबाट ५९ मिटरदेखि ६१० मिटरसम्मको उचाइ पाइन्छ । यो क्षेत्र १७ प्रतिशत भूभागमा फैलिएको छ ।

सुधा — साथीहरू ! हाम्रो बस अहिले सङ्खुवासभा जिल्लाको बाटामा गुड्दै छ । हेर त बाहिर, रमाइला पहाडहरू आफ्ना काखमा रुखहरूलाई राखेर चिसो हावाको स्पर्शले आनन्दित झैँ देखिन्छन् । सबै ठाउँमा छाएको हरियालीले हाम्रो मनलाई खुसी बनाउँछ ।

कैलाश — अँ, खुसी भएको प्रकृति देखेर कसको मन रमाउँदैन र ? म पनि काव्यहरूमा वर्णन गरिएको झैँ अर्को स्वर्ग सङ्खुवासभा जिल्लाको परिसर हेर्दै छु । यो हेर त ।

(सबै बसको झ्यालबाट बाहिर हेर्छन् ।)

## मूलपाठः सङ्खुवासभा



अनेकैर्महर्षिभिः साधनया पावितम्, मनोरमपक्षिकलरवैर्गुञ्जितम्, तरुलतिकाभिः सुशोभितञ्च सङ्खुवासभामण्डलम् अतीव मनोहारि वर्तते । आदिकालाद् एव ऐतिहासिकं, पौराणिकं, सांस्कृतिकं च महत्त्वं वर्धयत् सङ्खुवासभाभण्डलं नेपालस्य पूर्वभागे विराजितं वर्तते । नेपालस्य एकीकरणात् प्राक्

पल्लोकिरातराज्ये स्थितमिदं मनोरमं मण्डलमस्ति । अस्य पूर्वदिशि ताप्लेजुङ-तेह्रथुममण्डले वर्तेते, दक्षिणस्यां दिशि तेह्रथुम-धनकुटामण्डले स्तः, पश्चिमस्यां दिशि च सोलुखुम्बु-भोजपुरमण्डले विद्येते । एवञ्च उत्तरस्यां दिशि चीनदेशपर्यन्तं विस्तृतायामस्यां भूम्यामुच्चहिमालयेषु पञ्चमो मकालुहिमालयो विराजते । सामुद्रिकस्तराद् विश्वस्य एव निम्नस्थाने स्थितया 'अरूण'नामिकया उपत्यकया सुसज्जितमिदं मण्डलं प्रतिवर्षं पर्यटकान् आहूय स्वसौन्दर्यं विश्वस्मिन् प्रसारयत् अस्ति । सङ्खुवा-सभानद्योः संयोजनेन अस्य नाम सङ्खुवासभा विहितेति वदन्ति ज्येष्ठाः ।

सङ्खुवासभामण्डलं २७ं०६' उत्तराक्षांशतः २७ं५५' उत्तराक्षांशपर्यन्तम्, ८८ं५७' पूर्वदेशान्तरात् ८७ं४०' पूर्वदेशान्तरपर्यन्तं विस्तृतमस्ति । राजनीतिकविभाजनानुसारम् अस्मिन् सङ्घीयनिर्वाचनक्षेत्रमेकमेवास्ति चेत् प्रदेशनिर्वाचनक्षेत्रे द्वे वर्तेते । पञ्चनगरपालिकासु अनन्तरं पञ्चसु एव ग्रामपालिकासु मण्डलं विभक्तमस्ति । ३४६९.१७ वर्गकिलोमिटरक्षेत्रफलेन युक्तस्यास्य मण्डलस्य प्रमुखं केन्द्रमस्ति खाँदबारी । तत्र सर्वकारस्य प्रमुखाः कार्यालयाः सन्ति । मण्डलस्यास्य सुप्रसिद्धं नगरमस्ति चैनपुरनगरम् । अत्रत्या कर्करी देशे सुप्रसिद्धा वर्तते । एकीकरणस्य पश्चात् 'पूर्व ६ नम्बर' इति नाम्ना परिचितस्य चैनपुरस्य प्राचीनं नाम 'गोलाबजार' आसीदिति कथयन्तीतिहासज्ञाः । चन्द्रपुरस्य अपभ्रंशत्वेन 'चैनपुर' जातमिति ज्ञापयन्ति भाषावैज्ञानिकाः। अद्यापि दुर्गशस्त्रागारादिबोधकानि गढीकोतशब्दयुक्तानि गढीबजार-कोतडाँडा-बानेश्वरगढी-लोहाकोटादीनि स्थाननामानि तथा भूम्युत्खनेन प्राप्ताः सामग्रीर्दृष्ट्वा प्राचीनकाले दुर्गेषु राजानः प्रासादान् निर्माय राज्यमकुर्वन्निति अनुमातुं शक्यते ।

स्थानीयाः सङ्खुवासभामण्डलं शिवपार्वत्योः क्रीडास्थलरूपेण परिचाययन्ति । सिद्धकाली-शिवधारा-पार्वतीगुफा-गुफापोखरी-सभापोखरीसदृशैः धार्मिकमहत्त्वयुक्तैः स्थलैः सज्जीकृतमिदं मण्डलं मनोविनोदं प्रसारयति । विशेषतो हिन्दुबौद्धधर्मावलम्बिनोऽस्य मण्डलस्य विविधानि स्थानानि भ्रमितुं श्रद्धामर्पयितुञ्च आगच्छन्ति । स्वस्थानीव्रतकथायां सत्याः दग्धशरीराद् विभिन्नेषु स्थानेषु अङ्गपतनस्य चर्चा विहिता वर्तते । ग्रामीणातस्या एव दक्षिणनेत्रस्य पतनेन सिद्धकालीशक्तिपीठं प्रादुर्भूतमिति मन्यन्ते । न केवलं धार्मिकदृष्ट्या अपि तु प्राकृतिकदृष्ट्या च सुरम्यास्ति तस्मिन्नेव मण्डले स्थिता शिवधारा । मकालुहिमालयस्य अधोभागे स्थितेयं धारा शिवजटातो निस्सृता इति किंवदन्ती प्रचलिता वर्तते । धारेयं जलं भ्रामयन्ती अधः पातयतीति श्रुत्वा जना विस्मिताः सन्तः तत्र गन्तुमुत्सुका भवन्ति । तत्स्थानं बौद्धाः रिम्पोछेलामानाम्नो बौद्धगुरोः तपःस्थलीं, जलधारां च अभिषेकं मन्यन्ते । तस्य एव निकटे पार्वतीगुफानाम्नी गुहा च वर्तते यत्र सख्यो विष्णुना सह पार्वत्या विवाहो न भवेदिति विचार्य तां तत्रैव गोपयित्वा अरक्षन् इति विश्वस्यते ।

खाँदबारीस्थानात् चत्वारि दिनानि व्यतीत्य सभापोखरीनाम्नीं पुष्करिणीं प्राप्तुं शक्यते । सभापोखरीगमनस्य कस्मिँश्चिद् एकस्मिन् पदमार्गे गुफापोखरीनाम्नी पुष्करिणी अवस्थिता अस्ति । पुष्करिण्या निकटे गुहा वर्तते अतोऽस्या नाम गुफापोखरी अभवदिति कथ्यते । प्राकृतिकदृष्ट्या मनोहरेमां पुष्करिणीमवलोकयितुं विशेषतो मोरङ-सुनसरी-तेह्रथुम-ताप्लेजुङमण्डलेभ्यः पर्यटका आगच्छन्ति, सौन्दर्यरसं पीत्वा मुग्धाश्च

भवन्ति । सभापोखरीनाम्न्यां पुष्करिण्यां देवाः सभाम् आयोजयन् इति विश्वासः क्रियते । केचिद् वेदव्यासोऽस्यां पुष्करिण्यां वेदीं निर्माय गणेशस्य सहयोगेन महाभारतम् अलिखदिति कथयन्ति । केचित् पुरा देवा असुरेभ्यो भूमिं रक्षितुमत्र आगत्य सभाम् अकुर्वन् इति च वदन्ति चेत् केचिद् वेदव्यासस्तत्र ऋषीन् पुराणम् अश्रावयत् ततः शिवपर्वताद् व्यासासनं रक्षितुं जलप्रवाहो भूत्वा पुष्करिणी निर्मिता इति च निगदन्ति । पुष्करिण्या मध्ये स्थिता वेदी एव व्यासासनं कथ्यते । अनेकाभिः किंवदन्तीभिरस्याः पुष्करिण्या गौरवं वर्धितमस्ति । अन्याश्च पुष्करिण्यस्तथा वरुणहिमनद्या सह अरूण-सङ्खुवा-सभा-पिलुवा-हेँवा-इप्सुवा-आप्सुवा-इखुवा-कासुवा-सिसुवाद्यो नद्यः खोलिकाश्च मण्डलस्य शोभां वर्धयन्त्यः जनान् आकर्षयन्ति ।

लालगौरपुष्पस्य राजधानीति ख्याते तीनजुरे-जलजले-मिल्केक्षेत्रे सङ्खुवासभामण्डलस्य भूभागोऽपि पतति । अस्मिन् मण्डले दुर्लभानां जीवानां वासोऽस्ति । वृक्षभल्लूक-हिमभल्लूक-हिमचित्रक-व्याघ्र-शशक-हरिणादयोऽत्र प्राप्यन्ते । तथैव पाण्डा-ओध-काँडेभ्याकुर-भिँगेफिस्टो-पखेटोभ्याकुरोनामकानां जीवानां वासेन अनेकेषां वनस्पतीनामुद्भवेन च इदं मण्डलं जैविकविविधताभिः युक्तमस्ति । मकालुहिमालयेन सह बरुनत्से-हिमचुली-कुम्भकर्णहिमाद्रयश्च अत्र सुशोभिता दृश्यन्ते । अस्मिन्नेव मण्डले स्थितस्य मकालुवरुणराष्ट्रियनिकुञ्जस्य अधिकभूभागे वसन्ततौ लालगौरपुष्पाणां विकासेन पुष्पमयाः पर्वता हिमालयान् पश्यन्तो गौरवं वर्धयन्ति, यत्रैकवारमेव गत्वा न कस्यापि मनस्तृप्यति ।

सङ्खुवासभामण्डलेऽनेकानि गन्तव्यानि स्थानानि सन्ति । अत्र विशेषतया राईलिम्बूजातीयानां निवासोऽस्ति चेद् ब्राह्मणक्षत्रियनेवारशेर्पाजातीयानां च वासोऽस्ति । जातीयसहिष्णुतायाः सांस्कृतिकसहिष्णुतायाश्च अनुपममुदाहरणमस्ति एतन्मण्डलम् । कृषिकर्मणि निरतानां जनानामाधिक्यमत्र प्राप्यते । पर्वतीयहिमालयीयक्षेत्रेषु अस्य अधिको भूभागो मिलति, अत एव आपणक्षेत्राणां सङ्ख्या न्यूना अस्ति चेत् आवासक्षेत्रस्य क्षेत्रफलमपि न्यूनमेव अस्ति । अत्र आधिक्येन वनक्षेत्रं वर्तते । अत्रत्यानां पर्यटकीयानां क्षेत्राणां प्रचारेण पर्यटकान् वर्धयित्वा आर्थिकी उन्नतिः कर्तव्या । स्थानीयसर्वकारेण क्षेत्रस्य संरक्षणार्थं, प्रवर्धनार्थं, प्रचारार्थं च प्रयासो विधातव्यः । एतद् नेपालस्य एकं प्रमुखं गन्तव्यमस्ति ।

धेरै ऋषिहरूको साधनाले पवित्र बनेको, मन रमाउने चराहरूको आवाजले गुन्जिएको र रुखलहराहरूले सुशोभित सङ्खुवासभा जिल्ला आदिकालबाट नै ऐतिहासिक, पौराणिक र सांस्कृतिक महत्त्वलाई बढाउँदै नेपालको पूर्वी भागमा विराजित छ । नेपालको एकीकरणभन्दा पहिला पल्लो किराँत राज्यमा रहेको यो जिल्ला मनोरम छ । यसको पूर्वतर्फ ताप्लेजुङ र तेह्रथुम, दक्षिणतर्फ तेह्रथुम र धनकुटा तथा पश्चिमतर्फ सोलुखुम्बु र भोजपुर जिल्ला छन् । यसै गरी उत्तरतर्फ चीनसम्म फैलिएको यस जिल्लाको भूमिमा उच्च हिमालहरूमा पाँचौँ मकालु हिमाल पनि छ । समुद्री सतहबाट विश्वको नै होचो ठाउँमा रहेको अरुण उपत्यकाले सुसज्जित यो जिल्ला प्रत्येक वर्ष पर्यटकहरूलाई बोलाएर आफ्नो सौन्दर्य विश्वमाझ फैलाउँदै छ । सङ्खुवा र सभा नदीको संयोजनबाट यसको नाम सङ्खुवासभा रहेको पाकाहरू बताउँदछन् ।

सङ्खुवासभा जिल्ला २७ ॱ०६' उत्तरी अक्षांशदेखि २७ ॱ५५' उत्तरी अक्षांशसम्म र ८८ ॱ५७' पूर्वी देशान्तरबाट ८७ ॱ४०' पूर्वी देशान्तरसम्म फैलिएको छ । राजनीतिक विभाजनअनुसार यसमा एउटा सङ्घीय निर्वाचन र दुईओटा प्रदेश निर्वाचन क्षेत्र छन् । यो जिल्ला पाँच नगरपालिका र पाँच गाउँपालिकामा बाँडिएको छ । ३४६९.१७ वर्गकिलोमिटर क्षेत्रफल यस जिल्लाको प्रमुख केन्द्र खाँदबारी हो । त्यहाँ प्रमुख सरकारी कार्यालयहरू छन् । चैनपुर यस जिल्लाको सुप्रसिद्ध सहर हो । यहाँको करुवा देशभर चर्चित छ । एकीकरणपछि 'पूर्व ६ नम्बर' भनेर चिनिएको चैनपुरको पुरानो नाम 'गोलाबजार' थियो भनी इतिहासविद्हरू बताउँछन् । चन्द्रपुरको अपभ्रंशबाट 'चैनपुर' भएको भाषावैज्ञानिकहरूको कथन छ । आज पनि किल्लाकोट आदि बुझाउने गढीकोत शब्द प्रयोग भएका गढीबजार-कोतडाँडा-बानेश्वरगढी-लोहाकोट आदि ठाउँका नाम तथा जमिनको उत्खननबाट पाइएका सामग्रीलाई हेर्दा प्राचीन समयमा किल्लाहरूमा राजाहरूले दरबार बनाएर राज्य गरे होलान् भन्ने अनुमान गर्न सकिन्छ ।

स्थानीयवासी सङ्खुवासभा जिल्लालाई शिवपार्वतीको क्रीडास्थलका रूपमा चिनाउँछन् । सिद्धकाली शिवधारा पार्वतीगुफा गुफापोखरी सभापोखरीजस्ता धार्मिक महत्त्वका ठाउँहरूले सजिएको यो जिल्ला मनमा आनन्द फैलाउँछ । विशेष गरी हिन्दु र बौद्ध धर्मावलम्बीहरू यस जिल्लाका विभिन्न स्थानहरू घुम्न र श्रद्धा अर्पण गर्न आउँछन् । स्वस्थानी व्रतकथामा सतीको डढेको शरीरबाट विभिन्न ठाउँमा अङ्गपतन भएको चर्चा गरिएको छ । गाउँलेहरू तिनकै दाहिने आँखाका पतनबाट सिद्धकालीपीठको प्रादुर्भाव भएको मान्दछन् । यसै जिल्लामा रहेको शिवधारा धार्मिक दृष्टिले मात्र नभई प्राकृतिक दृष्टिले पनि सुरम्य छ । मकालु हिमालको तल्लो भागमा रहेको यो धारा शिवको जटाबाट निस्किएको भन्ने किंवदन्ती प्रचलित छ । यो धारा माथिबाट घुम्दै झर्छ भन्ने सुनेर मानिसहरू आश्चर्यचकित हुँदै त्यहाँ पुग्न उत्सुक हुन्छन् । यस ठाउँलाई बौद्धहरू बौद्धगुरु रिम्पोछे लामाले तपस्या गरेको स्थल र धारालाई गुरुको अभिषेक मान्दछन् । त्यसकै नजिक पार्वतीगुफा छ । सखीहरूले पार्वतीको विवाह विष्णुसँग नहोओस् भनेर पार्वतीलाई त्यहीँ लुकाएर राखेका थिए भन्ने विश्वास गरिन्छ ।

खाँदबारीबाट चार दिन लगाएर सभापोखरी नामको पोखरी पुग्न सकिन्छ । सभापोखरी जाने पदमार्गमा गुफापोखरी नामको पोखरी रहेको छ । पोखरीको नजिक गुफा भएकाले यसको नाम गुफापोखरी भयो भनिन्छ । प्राकृतिक दृष्टिले मनोहर यो पोखरी हेर्न विशेष गरी मोरङ, सुनसरी, तेह्रथुम र ताप्लेजुङ जिल्लाहरूबाट पर्यटकहरू आउँछन्, सौन्दर्यको रस पिएर लट्ठ हुन्छन् । सभापोखरीमा देवताहरूले सभाको आयोजना गरे भन्ने विश्वास गरिन्छ । केही वेदव्यासले यस पोखरीमा वेदी बनाएर गणेशको सहयोगले महाभारत लेखे भन्दछन्, केही पहिले देवताहरूले राक्षसहरूबाट धर्तीको रक्षा गर्न यहाँ आएर सभा गरे भन्दछन् भने केहीले वेदव्यासले त्यहाँ ऋषिहरूलाई पुराण सुनाए, सकिएपछि शिवपर्वतबाट व्यासासनको रक्षा गर्न पानी प्रवाहित भएर पोखरीको निर्माण भयो

भन्दछन् । पोखरीको बिचमा रहेको वेदी नै व्यासासन भनिन्छ। धेरै किंवदन्तीहरूले यस पोखरीको गौरव बढेको छ । अरू पोखरीहरू र वरुणहिमनदीसँगै अरूण, सङ्खुवा, सभा, पिलुवा, हँवा, इप्सुवा, आप्सुवा, इखुवा, कासुवा, सिसुवा आदि नदी तथा खोलाहरूले जिल्लाको शोभा बढाउँदै मानिसहरूलाई आकर्षित गर्दछन् ।

लालीगुराँसको राजधानी भनेर चिनिएको तीनजुरे-जलजले-मिल्केक्षेत्रमा सङ्खुवासभा जिल्लाको भूभाग पनि पर्दछ। यस जिल्लामा दुर्लभ जीवहरूको वास छ। यहाँ रुखभालु, हिउँभालु, हिउँचितुवा, बाघ, खरायो, हरिण आदि पाइन्छन्। त्यसै गरी पाण्डा, ओत, काँडेभ्याकुर, भिँगेफिस्टो, पखेटोभ्याकुर नामका जीवहरूको वासले र अनेक वनस्पतीको उद्भवले यो जिल्ला जैविकविविधताले युक्त छ। मकालु हिमालसँगै बरुनत्से, हिमचुली र कुम्भकर्णलगायतका हिमालहरू यहाँ सुशोभित देखिन्छन्। यही जिल्लामा रहेको मकालुवरुण राष्ट्रियनिकुञ्जको धेरैजसो भूभागमा वसन्त ऋतुमा लालीगुराँस फुलेर गुराँसमय भएका पहाडहरू हिमाललाई हेर्दै गौरव बढाउँछन्, जहाँ एकपटक मात्र गएर कसैको मन तृप्त हुँदैन ।

सङ्खुवासभा जिल्लामा जानुपर्ने ठाउँहरू धेरै छन्। यहाँ विशेष रूपमा राईलिम्बूहरूको बसोबास छ भने ब्राह्मण, क्षत्री, नेवार, शेर्पा आदिको पनि बसोबास छ । यो जातीय सहिष्णुता र सांस्कृतिक सहिष्णुताको अनुपम उदाहरण हो। यहाँ खेतीपातीमा लागेका मानिसहरूको बाहुल्य पाइन्छ। पहाडी र हिमाली क्षेत्रमा यसको धेरै भूभाग पर्दछ । त्यसैले बजार क्षेत्रको सङ्ख्या कम छ भने आवास क्षेत्रको क्षेत्रफल पनि कम नै छ। यहाँ धेरैजसो वनक्षेत्र छ। यहाँका पर्यटकीय क्षेत्रहरूको प्रचारबाट पर्यटकहरूलाई बढाएर आर्थिक उन्नति गर्नुपर्छ । स्थानीय सरकारले यस क्षेत्रको संरक्षण, प्रवर्धन र प्रचारका लागि प्रयास गर्नुपर्छ। यो नेपालको एक प्रमुख गन्तव्य हो ।

## शब्दार्थाः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| पक्षिकलरवः | खगध्वनिः | चराहरूको आवाज | Birds Sound |
| तरुलतिकाभिः | वृक्षलताभिः | रुखलहराहरूले | By Trees and Creepers |
| प्राक् | पूर्वम् | पहिले | Before |
| प्रासादाः | राजभवनानि | दरबार | Palaces |
| विस्मिताः | चकिताः | आश्चर्यमा परेका | Wondered |
| निकटे | पार्श्वे | नजिकमा | Nearby |
| पुष्करिणी | पुष्करः | पोखरी | Pond |

| | | | |
|---|---|---|---|
| आयोजयन् | आयोजितवन्तः | आयोजना गरे | Organized |
| हिमाद्रयः | हिमालयाः | हिमालहरू | Mountains |
| आधिक्यम् | प्राचुर्यम् | धेरै हुनु | Abundance |
| अनुपमम् | अद्वितीयम् | अनौठो | Unique |
| गन्तव्यम् | गमनीयम् | जानुपर्ने | Destination |

## अभ्यासः

### श्रवणं भाषणं च

१. **समस्तपदानि श्रुत्वा अर्थं कथयत**

मनोरमपक्षिकलरवैः, सङ्खुवा-सभानद्योः, राजनीतिकविभाजनानुसारम्, दुर्गशस्त्रागारादिबोधकानि, शिवपार्वत्योः, हिन्दुबौद्धधर्मावलम्बिनः, वसन्तर्तौ, पर्वतीयहिमालयीयक्षेत्रेषु ।

२. **शिक्षकात् श्रुत्वा पदानि विच्छिद्य वाचयत**

सङ्खुवासभामण्डलेऽनेकानि गन्तव्यानि स्थानानि सन्ति । अत्र विशेषतया राईलिम्बूजातीयानां निवासोऽस्ति चेद् ब्राह्मणक्षत्रियनेवारशेर्पाजातीयानां च वासोऽस्ति । जातीयसहिष्णुतायाः सांस्कृतिकसहिष्णुतायाश्च अनुपममुदाहरणमस्ति एतन्मण्डलम् । कृषिकर्मणि निरतानां जनानामाधिक्यमत्र प्राप्यते । पर्वतीयहिमालयीयक्षेत्रेषु अस्य अधिको भूभागो मिलति, अत एव आपणक्षेत्राणां सङ्ख्या न्यूना अस्ति चेत् आवासक्षेत्रस्य क्षेत्रफलमपि न्यूनमेव अस्ति । अत्र आधिक्येन वनक्षेत्रं वर्तते । अत्रत्यानां पर्यटकीयानां क्षेत्राणां प्रचारेण पर्यटकान् वर्धयित्वा आर्थिकी उन्नतिः कर्तव्या । स्थानीयसर्वकारेण क्षेत्रस्य संरक्षणार्थं, प्रवर्धनार्थं, प्रचारार्थं च प्रयासो विधातव्यः । एतद् नेपालस्य एकं प्रमुखं गन्तव्यमस्ति ।

३. **पाठेऽधो लिखितैः पदैर्निर्मितानि वाक्यानि मित्रात् शृणुत**

उत्तरस्याम्, संयोजनेन, प्रमुखम्, ज्ञापयन्ति, क्रीडास्थलरूपेण, किंवदन्ती, निकटे, सौन्दर्यरसम्, गौरवम्, दृश्यन्ते, गन्तव्यानि, कृषिकर्मणि ।

४. **वाक्यानि श्रुत्वा एकवाक्येन सारांशं श्रावयत**

सङ्खुवासभामण्डले अनेकाः नद्यः सन्ति । तत्रैव वरुणहिमनदी प्रवाहिता अस्ति । मण्डलस्य वनक्षेत्रस्य सौन्दर्यस्य वर्णनं कर्तुं नशक्यते । ऋतूनाम् अनुसारं विविधानि पुष्पाणि विकसन्ति । पुष्करिण्यः पर्यटकान् तत्र आगन्तुम् आह्वयन्ति । ग्रामीणाश्च स्वस्थानगौरवं मुक्तकण्ठेन श्रावयन्ति । कवयः सौन्दर्यं वर्णयन् साहित्यं रचयन्ति ।

## ५. अधोलिखितस्य अनुच्छेदस्य श्रवणेन रिक्तस्थानेषु उपयुक्तानि पदानि वदत

पुराणशब्दः प्राचीनमिति अर्थं द्योतयति । सामान्यतया यस्य सम्बन्धः पुरातनकालेन सह अस्ति वा यत्र इतिहासविषयकं ज्ञानं प्राप्यते तत् पुराणमिति निगद्यते । पुराणस्य विभिन्नानि लक्षणानि सन्ति परं तेषु सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितानां वर्णनं यत्र प्राप्यते तदेव पुराणमिति लक्षणं बहुधा स्वीकृतं दृश्यते । तत्र सर्गः सृष्टिरेव भवति । प्रतिसर्गश्च लयोऽस्ति । वंशशब्देन सूर्यचन्द्रादिवंशा बोध्यन्ते । मन्वन्तरशब्दः स्वायम्भुवादीन् चतुर्दशमनून् सङ्केतयति । वंशानुचरितमिति तत्तद्वंशे जातानां पराक्रमिणां राज्ञाम्, महापुरुषाणां, महर्षीणां वा चरित्रं सूचयति । व्यासविरचितानि अष्टादशपुराणानि प्रसिद्धानि सन्ति । तेषाम् अष्टादशैव उपपुराणानि सन्तीति स्वीक्रियते चेत् तेषामपि अष्टादशानाम् औपपुराणानां गणनायाः परम्परा विद्यते ।

(क) पुराणस्य सम्बन्धः ..............कालेन सह अस्ति ।

(ख) सर्गः ................. एव भवति ।

(ग) ................शब्देन सूर्यचन्द्रादिशब्दा बोध्यन्ते ।

(घ) मनवः ............... सन्ति ।

(ङ) वंशानुचरितं महापुरुषाणां चरित्रं ..............।

(च) औपपुराणानां सङ्ख्या .............. वर्तते ।

## ६. विकल्पान् श्रुत्वा पाठाधारेण उचितकथनं निगदत

(क)

(अ) सङ्खुवासभामण्डले महर्षिभिः साधना विहिता ।

(आ) सङ्खुवासभामण्डले कैरपि साधना न विहिता ।

(इ) सङ्खुवासभामण्डले सर्वैः साधना विहिता ।

(ख)

(अ) सङ्खुवासभामण्डलस्य प्रमुखं केन्द्रं 'खाँदबारी' अस्ति ।

(आ) सङ्खुवासभामण्डलस्य प्रमुखं केन्द्रं 'चैनपुर' अस्ति ।

(इ) सङ्खुवासभामण्डलस्य प्रमुखं केन्द्रं शिवधारा अस्ति ।

(ग)

(अ) सङ्खुवासभामण्डले अन्नपूर्णहिमालयः अस्ति ।

(आ) सङ्खुवासभामण्डले सगरमाथाहिमालयः अस्ति

(इ) सङ्खुवासभामण्डले मकालुहिमालयः अस्ति ।

(घ)

(अ) सङ्खुवासभामण्डले दुर्लभाः जीवाः अपि सन्ति ।

(आ) सङ्खुवासभामण्डले सुलभाः जीवाः एव सन्ति ।

(इ) सङ्खुवासभामण्डले दुर्लभाः जीवाः एव सन्ति ।

(ङ)

(अ) सङ्खुवासभामण्डलम् एकीकरणात् प्राक् पल्लोकिरातराज्यान्तर्गतम् आसीत् ।

(आ) सङ्खुवासभामण्डलम् एकीकरणात् प्राक् वल्लोकिरातराज्यान्तर्गतम् आसीत् ।

(इ) सङ्खुवासभामण्डलम् एकीकरणात् प्राक् मध्यकिरातराज्यान्तर्गतम् आसीत् ।

(च)

(अ) अरूण-उपत्यका सामुद्रिकस्तराद् विश्वस्य निम्नस्थाने स्थिता अस्ति ।

(आ) दाङ-उपत्यका सामुद्रिकस्तराद् विश्वस्य निम्नस्थाने स्थिता अस्ति ।

(इ) वरुण-उपत्यका सामुद्रिकस्तराद् विश्वस्य निम्नस्थाने स्थिता अस्ति ।

७. **श्रवणपाठस्य अनुच्छेदं श्रुत्वा प्रश्नानुत्तरयत**

(अ) प्रश्नानुत्तरयत

(क) विष्णुप्रसादज्ञवालीद्वारा रचितस्य पुस्तकस्य नाम किम् अस्ति ?

(ख) पुराणे किं प्रदर्शितम् अस्ति ?

(ग) नेपालस्य पौराणिकमहत्त्वम् कदाप्रभृति प्रचलितम् ?

(घ) अस्मिन् देशे के ज्ञानम् प्राप्नुवन् ?

(ङ) नेपालः केषां कर्मभूमिरूपेण प्रसिद्धोऽस्ति ?

(आ) रिक्तस्थानानि पूरयत

(क) नेपालस्य उत्तरे ............क्षेत्रम् अस्ति ।

(ख) नेपालस्य दक्षिणे ............क्षेत्रम् अस्ति ।

(ग) नेपालस्य पश्चिमे ...............क्षेत्रम् अस्ति ।

८. **शिक्षकात् पाठश्रवणाधारेण सङ्खुवासभामण्डलस्य भूगोलं वर्णयत ।**

९. **पाठं श्रुत्वा सङ्खुवासभामण्डलस्य किं स्थानं गन्तुमिच्छथ, कारणानि च वदत ।**

## पठनम्

१. **पाठस्थान् अनुच्छेदान् क्रमेण पठत ।**

२. **पाठस्य द्वितीयानुच्छेदं पठित्वा भौगोलिकीम् अवस्थितिं दर्शयत ।**

३. **अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत**

पद्मपुराणस्य सृष्टिखण्डस्य एकादशाध्याये भीष्मपुलस्त्यसंवादमाध्यमेन नेपालस्य बहूनां स्थानानामुल्लेखः प्राप्यते । तस्मिन्नेवाध्याये यज्ञवाराहतीर्थमिति कृत्वा वाराहक्षेत्रस्य, कोकामुखतीर्थमित्यनेन कोकानद्याः, इक्षुमतीतीर्थमित्यनेन इक्षुमतीनद्याः, पाशुपततीर्थमित्यनेन पशुपतिनाथस्य, पुष्करनामतीर्थमित्यनेन पोखरानरगरस्य, शालग्रामतीर्थमित्यनेन मुक्तिनाथक्षेत्रेण सह कृष्णागण्डक्या अनन्तरं कौशिकी नद्याश्च उल्लेखो विहितो दृश्यते । अस्मिन्नेव पुराणे पातालखण्डे शत्रुघ्ननामकस्य राज्ञस्तीर्थयात्राप्रसङ्गे अपि कृष्णागण्डक्याश्चर्चा अस्ति । अस्य पुराणस्य चतुःषष्ट्यधिकशततमेऽध्याये कश्यपेन निर्मितस्य काश्यपह्रदस्य उल्लेखः प्राप्यते । एतेन कास्कीमण्डलं सङ्केतितमिति विद्वांसो मन्यन्ते । पद्मपुराणस्य उत्तरखण्डे वराहक्षेत्रस्य, नीलकण्ठतीर्थस्य च चर्चा विहिता अस्ति । नीलकण्ठतीर्थेन गोसाइँकुण्डं बोध्यते । शिवपुराणे च कौशिकीनद्याः प्रसङ्गो वर्णितोऽस्ति । तत्पुराणे विष्णुतुलस्योः कथामाध्यमेन गण्डक्या उत्पत्तिविषयेऽपि लिखितं वर्तते । तत्रैव पशुपतिनाथस्य ज्योतिर्लिङ्गस्य नेपाले समुत्पत्तिः कथं जाता इति उल्लिखितमस्ति । एतत्पुराणम् उत्तरगोकर्णेश्वरस्य प्रादुर्भावविषयमुद्घाटयति । तत्क्षेत्रं काष्ठमण्डपस्य उत्तरभागे वर्तते । तथैव पाल्पामण्डले स्थितस्य माण्डव्यकेदारसरोवरस्य प्रसङ्गमपि शिवपुराणं वर्णयति । एवमेव गुल्मीमण्डलस्य ऋष्यशृङ्गपर्वतस्य तत्र उल्लेखः प्राप्यते । अपभ्रंशवशात् स पर्वतोऽधुना रेसुङ्गापवर्तनाम्ना परिचीयत इति बुधसम्मतिः ।

प्रश्नाः

(क) पद्मपुराणस्य एकादशाध्याये कयोः संवादे नेपालस्य स्थानानामुल्लेखोऽस्ति ?

(ख) पद्मपुराणस्य पातालखण्डे शत्रुघ्नस्य तीर्थयात्राप्रसङ्गे कस्याश्चर्चा अस्ति ?

(ग) नीलकण्ठतीर्थमधुना किं कथयन्ति जनाः ?

(घ) शिवपुराणे विष्णुतुलस्योः कथामाध्यमेन का सङ्केतिता ?

(ङ) उत्तरगोकर्णेश्वरः कुत्र अस्ति ?

(च) पाल्पामण्डले स्थितः सरोवरः कः ?

(छ) रेसुङ्गापर्वतस्य पौराणिकं नाम किम् अनुमीयते ?

पद्मपुराणको सृष्टिखण्डको एघारौँ अध्यायमा भीष्म र पुलस्त्यको संवादका माध्यमबाट नेपालका धेरै तीर्थहरूको उल्लेख पाइन्छ । त्यही अध्यायमा यज्ञवाराहतीर्थ भनेर वराहक्षेत्र, कोकामुखतीर्थ भनेर कोका नदी, इक्षुमतीतीर्थ भनेर इक्षुमती नदी, पाशुपततीर्थ भनेर पशुपतिनाथ, पुष्करतीर्थ भनेर पोखरा सहर, शालग्रामतीर्थ भनेर मुक्तिनाथ क्षेत्रसँगै कालीगण्डकी र कोसी नदीको उल्लेख गरिएको देखिन्छ । यही पुराणमा पातालखण्डमा शत्रुघ्न नाम गरेका राजाको तीर्थयात्राको प्रसङ्गमा पनि कालीगण्डकीको चर्चा छ । यस पुराणको १६४ औँ अध्यायमा कश्यपले बनाएको काश्यप तलाउको उल्लेख पाइन्छ । यसले कास्की जिल्लालाई सङ्केत गरेको हो भन्ने विद्वान्हरू मान्दछन् । पद्मपुराणकै उत्तरखण्डमा वराहक्षेत्र र नीलकण्ठतीर्थको चर्चा

गरिएको छ। नीलकण्ठतीर्थ भन्नाले गोसाइँकुण्ड बुझिन्छ। शिवपुराणमा कोसी नदीको प्रसङ्ग वर्णित छ। त्यस पुराणमा विष्णु र तुलसीको कथाका माध्यमबाट गण्डकीको उत्पत्तिविषयमा पनि लेखिएको छ। त्यहीँ नै पशुपतिनाथको ज्योतिर्लिङ्गको नेपालमा उत्पत्ति कसरी भयो भनी उल्लेख गरिएको छ। पुराणले उत्तरगोकर्णेश्वरको प्रादुर्भावको विषय उद्घाटन गरेको छ। त्यो क्षेत्र काठमाडौँको उत्तरतर्फ छ। त्यसै गरी पाल्पा जिल्लामा रहेको माण्डव्यकेदार सरोवरको प्रसङ्ग पनि शिवपुराणमा वर्णित छ। यसै गरी यस पुराणमा गुल्मी जिल्लाको ऋष्यशृङ्गपर्वतको उल्लेख पाइन्छ। अपभ्रंशका कारण त्यो पर्वत रेसुङ्गापर्वत नामले चिनिएको हो भन्ने विद्वान्हरूको मत छ।

## ४. गद्यांशं पठित्वा निर्दिष्टान् क्रियाकलापान् कुरुत

श्रीमद्भागवतपुराणं नेपाले अतीव प्रसिद्धमस्ति। सप्ताहं यावत् अस्य पुराणस्य श्रवणपरम्परा विद्यते। अस्मिन् पुराणे कौशिकीनद्या उल्लेखं विधाय शृङ्गीमहर्षिणा तपस्तप्तस्य शृङ्गपर्वतस्य च चर्चा कृतास्ति। स च पर्वतो गुल्मीमण्डलस्य रुरुक्षेत्रे वर्तते। एतत्पुराणे कोकाकौशिकीनद्योः सङ्गमस्थलस्य वराहक्षेत्रस्य विषयेऽपि वर्णनमस्ति। देवीभागवते च वराहक्षेत्रमुट्टङ्कितं वर्तते। अधिकेषु पुराणेषु वराहक्षेत्रस्य, कौशिकीनद्याः, गण्डक्याः, मुक्तिनाथक्षेत्रस्य च वर्णनं प्राप्यते। देवीभागवते व्यासः शुकं मिथिलानगरीं प्रेषयामास इति उल्लिखितं वर्तते। तादृश एव प्रसङ्गो नारदपुराणे च उपलभ्यते। तत्र प्राप्तः शुको जनकेन सह संवादमकरोदिति च तत्र वर्णितमस्ति। मिथिलानगरी जनकपुरनाम्ना प्रख्यातास्ति। देवीभागवते, ब्रह्मवैवर्तपुराणे, वराहपुराणे च विष्णुतुलस्योः संवादमाध्यमेन एव गण्डक्याश्चर्चा विहितास्ति। एवमेव नारदपुराणे मार्कण्डेयस्य कथामाध्यमेन गण्डक्याः, शालग्रामतीर्थस्य च वर्णनं विहितमस्ति। तत्रैव भरतोपाख्यानेऽपि गण्डक्या उल्लेखोऽस्ति। मार्कण्डेयपुराणे तु हिमालयानां वर्णनं प्राप्यते। अत्रैव नेपालस्य झापामण्डले स्थितस्य शताक्षीधाम्नः प्रसङ्गश्च मिलति।

प्रश्नाः

**(क) गद्यांशस्य विषयवस्तु मित्रैः सह विमृशत।**

**(ख) स्वस्य यात्राया आलेखं विलिख्य कक्षायां पठत।**

**(ग) गद्यांशस्य मौनपठनं विधाय कठिनपदेषु रेखाङ्कनं कुरुत।**

**(घ) अधोलिखितानां पदानां विभक्तिं चिनुत।**

नेपाले -

पुराणस्य -

अधिकेषु -

व्यासः -

शुकम् -

जनकेन -

गण्डक्याः -

हिमालयानाम् -

झापामण्डले -

प्रसङ्गः -

(ङ) **गद्यांशे उल्लिखितानां नेपालस्य स्थानानां सूचीं निर्मात ।**

श्रीमद्भागवतपुराण नेपालमा अत्यन्त प्रसिद्ध छ । यो पुराण सात दिनसम्म सुन्ने परम्परा छ । यस पुराणमा कोसीनदीको उल्लेख गरेर शृङ्गीमहर्षिले तपस्या गरेको शृङ्गपर्वतको चर्चा गरिएको छ । त्यो पर्वत गुल्मी जिल्लाको रुरुक्षेत्रमा छ । यस पुराणमा कोका र कोसी नदीको सङ्गमस्थल वराहक्षेत्रको विषयमा पनि वर्णन छ । देवीभागवतमा पनि वराहक्षेत्रबारे उल्लेख गरिएको छ । धेरै पुराणहरूमा वराहक्षेत्र, कोसीनदी, गण्डकी र मुक्तिनाथक्षेत्रको वर्णन पाइन्छ । देवीभागवतमा व्यासले शुकदेवलाई मिथिला क्षेत्र पठाएको भन्ने उल्लिखित छ । प्रसङ्ग नारदपुराणमा पनि पाइन्छ । त्यहाँ पुगेका शुकदेवले जनकसँग कुराकानी गरे भनी वर्णन गरिएको छ । मिथिला सहर जनकपुर नामबाट प्रख्यात छ । देवीभागवत, ब्रह्मवैवर्तपुराण र वराहपुराणमा पनि विष्णुतुलसीको कुराकानीका माध्यमबाट गण्डकीको चर्चा गरिएको छ । यसरी नै नारदपुराणमा मार्कण्डेयको कथाका माध्यमबाट गण्डकी र शालग्रामतीर्थको वर्णन गरिएको छ । त्यहीं नै भरतोपाख्यानमा पनि गण्डकीको उल्लेख छ । मार्कण्डेयपुराणमा चाहिँ हिमालहरूको वर्णन पाइन्छ । यसै पुराणमा नेपालको झापा जिल्लामा रहेको शताक्षी धामको प्रसङ्ग पनि भेटिन्छ ।

५. **अनुच्छेदं पठित्वा 'पुराणेषु नेपालस्थानानां माहात्म्यम्' इति विषये मित्रैः सह विमृशत**

ब्रह्मवैवर्तपुराणे याज्ञवल्क्यकथावर्णने, वराहपुराणे च वसुनामकस्य नृपस्य कथायां मिथिलानगर्या उल्लेखोऽस्ति। लिङ्गपुराणे पशुपतेः, गोकर्णस्य, वराहक्षेत्रस्य च प्रसङ्ग उल्लिखितोऽस्ति। वराहपुराणे वराहक्षेत्रमिथिलानगरीभ्यां सह पर्वतविशेषाणां, नदीविशेषाणाञ्च परिचर्चाक्रमे कौशिकीगण्डकीनद्योः प्रसङ्ग आयाति । तत्र वाग्वत्या महत्त्वं प्रकाश्य सुन्दरीजलस्य उल्लेखः प्राप्यते । शङ्खमूलं वर्णयित्वा गोकर्णेश्वरस्यैतिह्यं चानेन प्रकाशितम् । अस्मिन्नेव सालङ्कायनमहर्षेर्वृत्तान्तवर्णनक्रमे शालग्रामक्षेत्रस्य चर्चा कृतास्ति। मुनेर्देवदत्तस्य तपश्चर्याप्रसङ्गवर्णनपूर्वकं रुरुकन्यायाः कथां प्रस्तुत्य रुरुक्षेत्रस्य महत्त्वमस्मिन् पुराणे प्रतिपादितमस्ति । स्कन्दपुराणस्य ब्रह्मोत्तरखण्डे च गोकर्णेश्वरस्य चर्चा अस्ति । नेपाले प्रचलिता स्वस्थानीव्रतकथा स्कन्दपुराणानुसारमेव कथ्यते । तत्र शालीनद्याः प्रसङ्गोऽस्ति । स्कन्दपुराणस्य सप्त खण्डाः प्रसिद्धाः सन्ति । तेषु हिमवत्खण्डे विशेषतो नेपालस्य बहूनां स्थानानामुल्लेखः प्राप्यते । अत्र कोशीनां, गण्डकीनां, देवघट्टस्य, त्रिशूलीवेत्रावत्योः, नीलकण्ठह्रदभैरवकुण्डविष्णुकुण्डब्रह्मकुण्डानां, मुक्तिक्षेत्रस्य, वाग्वत्याः, श्लेष्मान्तकवनस्य, गोकर्णेश्वरस्य, शङ्खमूलस्य, सिन्धुलीमण्डलस्य कुशेश्वरस्य, कोटेश्वरबानेश्वरयोः, मृगस्थल्याः, किरातेश्वरस्य च उल्लेखो विद्यते । काशीतः प्रकाशिते त्रिंशदध्यायात्मके नेपालमाहात्म्यम् इति ग्रन्थे नेपालमाहात्म्यं स्कन्दपुराणाद् गृहीतमिति उल्लिखितमस्ति । तस्मिन् ग्रन्थे चाँगुनारायणस्य,

चितवनमण्डले स्थितस्य वाल्मीकेराश्रमस्य, वाग्वत्याः, शङ्खमूलस्य च वर्णनं विहितमस्ति । ज्वालापुराणनाम्नापि प्रसिद्धे वैश्वानरपुराणे दुल्लुप्रदेशस्य माहात्म्यमस्तीति पुराणज्ञाः कथयन्ति । म्याग्दीमण्डले स्थितस्य पुलस्त्याश्रमस्य वर्णनं वामनपुराणे प्राप्यते । कूर्मपुराणेऽपि शालग्रामतीर्थस्य विषये लिखितं वर्तते । गरुडपुराणे कोकामुखतीर्थस्य, वाराहतीर्थस्य, गोकर्णतीर्थस्य च सङ्केत उपलभ्यते । अस्मिन् पुराणे ब्रह्माण्डपुराणे च याज्ञवल्क्यस्य कथायां मिथिलानगर्याः उल्लेखोऽस्ति । पाण्डवानां विराटनगरं प्रति आगमनस्य सन्दर्भो गरुडपुराणे च अस्ति । नेपालस्य विराटनगरमधुनापि विराटनगरनाम्ना एव सम्बोध्यते । ब्रह्माण्डपुराणे कौशिकीगण्डकीभ्यां सह लोहितानद्याश्च चर्चा अस्ति । एवमेव हिमाद्रिखण्डे रूद्राक्षारण्यस्य, पिण्डेश्वरस्य, पिण्डेश्वरनिकटस्य सारस्वततीर्थस्य, कौशिक्याः प्रसङ्गश्च मिलति ।

ब्रह्मवैवर्तपुराण, याज्ञवल्क्यको कथावर्णन र वराहपुराणमा वसु नाम गरेका राजको कथामा मिथिला नगरको उल्लेख छ । लिङ्गपुराणमा पशुपति, गोकर्ण र वराहक्षेत्रको प्रसङ्ग उल्लिखित छ । वराहपुराणमा वराहक्षेत्र र मिथिलासँगै पर्वतहरूको र नदीहरूको परिचर्चा गर्ने क्रममा कोसी र गण्डकी नदीको प्रसङ्ग आउँछ । त्यहाँ वाग्मतीको महत्त्व बताएर सुन्दरीजलको उल्लेख पाइन्छ । शङ्खमूलको वर्णन गरेर गोकर्णेश्वरको इतिहास पनि यसले प्रकाशित गरेको छ । यसमा नै सालङ्कायन महर्षिको वृत्तान्त बताउने क्रममा शालग्रामक्षेत्रको चर्चा गरिएको छ । मुनि देवदत्तको तपस्याको वर्णनपूर्वक रुरुकन्याको कथा प्रस्तुत गर्दै रुरुक्षेत्रको महत्त्व पनि यस पुराणमा प्रतिपादित छ । स्कन्दपुराणको ब्रह्मोत्तरखण्डमा पनि गोकर्णेश्वरको चर्चा छ । नेपालमा प्रचलित स्वस्थानीव्रतकथा स्कन्दपुराणअनुसार नै भनिन्छ । त्यहाँ शालीनदीको प्रसङ्ग छ । स्कन्दपुराणका सप्त खण्डहरू प्रसिद्ध छन् । तिनमा हिमवत्खण्डमा विशेष गरी नेपालका धेरै ठाउँहरूको उल्लेख पाइन्छ । यहाँ कोसीहरू, गण्डकीहरू, देवघाट, त्रिशूली र वेत्रावती, गोसाइँकुण्ड, भैरवकुण्ड, विष्णुकुण्ड र ब्रह्मकुण्ड, मुक्तिक्षेत्र, वाग्मती, श्लेष्मान्तकवन, गोकर्णेश्वर, शङ्खमूल, सिन्धुली जिल्लाको कुशेश्वर, कोटेश्वर र बानेश्वर, मृगस्थली र किरातेश्वरको पनि उल्लेख छ । काशीबाट प्रकाशित तिस अध्यायको नेपालमाहात्म्यम् भन्ने ग्रन्थमा नेपालमाहात्म्य स्कन्दपुराणबाट लिइएको भनी उल्लिखित छ । त्यस ग्रन्थमा चाँगुनारायण, चितवन जिल्लामा रहेको वाल्मीकि आश्रम, वाग्मती र शङ्खमूलको वर्णन गरिएको छ । ज्वालापुराण नामबाट पनि प्रसिद्ध वैश्वानरपुराणमा दुल्लुप्रदेशको माहात्म्य छ भनेर पुराणविद्हरू भन्दछन् । म्याग्दी जिल्लामा रहेको पुलस्त्याश्रमको वर्णन वामनपुराणमा पाइन्छ । कूर्मपुराणमा पनि शालग्रामतीर्थको विषयमा लेखिएको छ । गरुडपुराणमा कोकामुखतीर्थ, वाराहतीर्थ र गोकर्णतीर्थको सङ्केत पाइन्छ । यस पुराणका साथै ब्रह्माण्डपुराणमा याज्ञवल्क्यको कथामा मिथिलानगरको उल्लेख छ । पाण्डवहरूको विराटनगर आगमनको सन्दर्भ गरुडपुराणमा छ । नेपालको विराटनगर अहिले पनि विराटनगर नामबाट नै प्रसिद्ध छ । ब्रह्माण्डपुराणमा कोसी र गण्डकीसँगै तामाकोसीको पनि चर्चा छ । यसरी नै हिमाद्रिखण्डमा रूद्राक्षारण्य, पिण्डेश्वर, पिण्डेश्वरनिकटको सारस्वततीर्थ र कोसीको प्रसङ्ग भेटिन्छ ।

## ६. अनुच्छेदस्य युगलपठनं कुरुत

अनेकैर्महर्षिभिः साधना विहिता, मनोरमपक्षिकलरवैः गुञ्जितम्, तरुलतिकाभिः सुशोभितञ्च सङ्खुवासभामण्डलम् आदिकालाद् एव ऐतिहासिकं, पौराणिकं, सांस्कृतिकं च महत्त्वं वर्धयत् नेपालस्य पूर्वभागे विराजितं वर्तते । नेपालस्य एकीकरणात् प्राक् पल्लोकिरातराज्ये स्थितमिदं मनोरमं मण्डलमस्ति । अस्य पूर्वदिशि ताप्लेजुङ-तेह्रथुममण्डले वर्तेते, दक्षिणस्यां दिशि तेह्रथुम-धनकुटामण्डले स्तः, पश्चिमस्यां दिशि च सोलुखुम्बु-भोजपुरमण्डले विद्येते । एवञ्च उत्तरस्यां दिशि चीनदेशपर्यन्तं विस्तृतायामस्यां भूम्यामुच्चहिमालयेषु पञ्चमो मकालुहिमालयो विराजते । सामुद्रिकस्तराद् विश्वस्य एव निम्नस्थाने स्थितया 'अरुण'नामिकया उपत्यकया सुसज्जितमिदं मण्डलं प्रतिवर्षं पर्यटकान् आहूय स्वसौन्दर्यं विश्वस्मिन् प्रसारयत् अस्ति । सङ्खुवा-सभानद्योः संयोजनेन अस्य नाम सङ्खुवासभा विहितेति वदन्ति ज्येष्ठाः ।

## ७. द्वयोः खण्डयोः पदानि संयोज्य सार्थकवाक्यानि पठत

| 'क'खण्डः | 'ख'खण्डः |
|---|---|
| स्थानीयाः सङ्खुवासभामण्डलं शिवपार्वत्योः | मण्डलं सज्जीकृतमस्ति । |
| धार्मिकमहत्त्वयुक्तैः स्थलैः | अङ्गपतनस्य चर्चा विहिता वर्तते । |
| स्वस्थानीव्रतकथायां सत्याः दग्धशरीराद् | क्रीडास्थलरूपेण परिचाययन्ति । |
| प्राकृतिकदृष्ट्या च | अधः पातयति । |
| धारेयं जलं भ्रामयन्ती | शिवधारा सुरम्यास्ति । |

## ८. रेखाङ्कितानां पदानां विभक्तिं निश्चित्य पठत

मम भगिनी <u>गृहाद्</u> बहिर्गन्तुमिच्छति । पिता तां <u>मया</u> सह गमनाय प्रेरयति । <u>गृहस्य</u> निकटे तस्याः सख्या गृहमस्ति । भगिनी तत्र गत्वा <u>सख्या</u> साकं क्रीडति । सख्या <u>गृहम्</u> अभितः राजमार्गः अस्ति । अतस्ते <u>गृहं</u> परितः एकघण्टापर्यन्तं क्रीडतः । <u>गृहपरिसराद्</u> बहिर्न गच्छथः । <u>ताभ्यां</u> हितं गृहप्राङ्गणे एव क्रीडनं भवति । अहं ते <u>सत्याद्</u> ऋते किमपि न वक्तव्यम् इति शिक्षयामि । मम <u>शिक्षणाद्</u> आरभ्य ते असत्यं न वदन्ति । <u>गृहस्य</u> दूरं तयोर्विद्यालयः अस्ति । <u>विद्यालयस्य</u> सदृशं पवित्रं स्थानं न कुत्रापि मिलति ।

मेरी बहिनी घरबाट बाहिर जान चाहन्छिन् । बुबा उनलाई मसँग जानका लागि प्रेरित गर्नुहुन्छ । घरको नजिकै उनकी साथीको घर छ । बहिनी त्यहाँ गएर साथीसँग खेल्छिन् । साथीको घर अगाडिपट्टि राजमार्ग छ । त्यसैले ती दुई घरवरिपरि खेल्छन् । ती दुईलाई घरको आँगनमा खेल्नु नै राम्रो हुन्छ । म ती दुईलाई सत्यबाहेक केही पनि बोल्नुहुन्न भन्ने सिकाउँछु । मैले सिकाएपछि तिनीहरू असत्य बोल्दैनन् । ती दुईटीको विद्यालय घरबाट टाढा छ । विद्यालयजस्तो पवित्र ठाउँ कतै पनि पाइँदैन ।

## लेखनम्

### १. पदानि अनुलिखत

तरुलतिकाभिः, उच्चहिमालयेषु, कथयन्तीतिहासञ्ज्ञाः, क्रीडास्थलरूपेण, धार्मिकमहत्त्वयुक्तैः, विशेषतया, प्राकृतिकदृष्ट्या, जैविकविविधताभिः, जातीयसहिष्णुतायाः, प्रदेशनिर्वाचनक्षेत्रे, भाषावैज्ञानिकाः, वनस्पतीनाम्, अङ्गपतनस्य, पर्वतीयहिमालयीयक्षेत्रेषु ।

### २. वाक्येषु प्रयोगं कुरुत

सुशोभितम्, महत्त्वम्, सुसज्जितम्, ज्येष्ठाः, कर्करी, सामग्रीः, मण्डलम्, सुरम्या, निःसृता, व्यतीत्य, पुष्करिणी, गौरवम्, भूभागः ।

### ३. विपरीतार्थकपदानि निर्दिशत

विहितम्, पूर्वभागे, संयोजनेन, ज्येष्ठाः, पश्चात्, प्राचीनम्, प्रासादान्, प्रसारयति, आगच्छन्ति, प्रचलिता, निकटे, विश्वासः, देवाः, न्यूना, संरक्षणार्थम् ।

### ४. एकवाक्येन उत्तरयत

(क) सङ्खुवासभामण्डलम् आदिकालादेव कीदृशं महत्त्वं वर्धयत् वर्तते ?

(ख) अरुण-उपत्यका कीदृशी उपत्यका वर्तते ?

(ग) सङ्खुवासभामण्डलस्य नाम कथं सङ्खुवासभा इति जातम् ?

(घ) प्राचीनकाले राजानः कुत्र प्रासादानां निर्माणं कृतवन्तः ?

(ङ) सत्या अङ्गपतनस्य चर्चा कुत्र विहिता ?

(च) पर्यटकाः किं पीत्वा मुग्धा भवन्ति ?

(छ) लालगौरपुष्पस्य राजधानी का अस्ति ?

(ज) सङ्खुवासभामण्डले के हिमालयाः विराजन्ते ?

(झ) लालगौरपुष्पाणि कदा विकसन्ति ?

(ञ) नेपालस्य एकं गन्तव्यं किम अस्ति ?

### ५. सङ्क्षेपेणोत्तराणि लिखत

(क) सङ्खुवासभामण्डलस्य पूर्वदक्षिणपश्चिमोत्तरदिक्षु केषाम् अवस्थितिरस्ति ?

(ख) सङ्खुवासभामण्डलस्य भौगोलिकीम् अवस्थितिं प्रस्तुत ।

(ग) चैनपुरस्थानस्य परिचयं दत्त ।

(घ) शिवधाराया वर्णनं कुरुत ।

(ङ) पार्वतीगुफाविषये कीदृशो विश्वासः क्रियते ?

(च) सभापोखरीविषये कीदृश्यः किंवदन्त्यः सन्ति ?

(छ) सङ्खुवासभामण्डलं किमर्थं जैविकविविधताभिर्युक्तं मन्यते ?

(ज) सङ्खुवासभामण्डले कीदृशा जना निवसन्ति ?

(झ) सङ्खुवासभामण्डलं किमर्थं जातीयसहिष्णुताया उदाहरणं कथ्यते ?

(ञ) सङ्खुवासभामण्डलस्य विषये पठित्वा त्वयि कीदृशी धारणा समुत्पन्ना ?

## ६. मूलधातुं मूलशब्दं वा लिखत

| | |
|---|---|
| ऐतिहासिकम् | जातम् |
| महत्त्वम् | निर्माय |
| वर्धयत् | स्थिता |
| आहूय | श्रुत्वा |
| अवलोकयितुम् | पश्यन्तः |
| रक्षितुम् | जातीयः |
| गौरवम् | उन्नतिः |
| वासः | कर्तव्या |
| पुष्पमयाः | गन्तव्यम् |

## ७. वाक्यानि विश्लिष्य चत्वारि वाक्यानि निर्मात

प्राकृतिकदृष्ट्या मनोहरेमां पुष्करिणीमवलोकयितुं विशेषतः मोरङ-सुनसरी-तेह्रथुम-ताप्लेजुङमण्डलेभ्यः पर्यटका आगच्छन्ति, सौन्दर्यरसं पीत्वा मुग्धाश्च भवन्ति ।

## ८. विभक्तिं संशोध्य लिखत

(क) रामो गृहं विद्यालयं गच्छति ।

(ख) अहं दशम्या प्रसादं गृह्णामि ।

(ग) अस्माभिः अवकाशः अस्ति ।

(घ) भगिन्या पुष्पवाटिकाम् अगच्छत् ।

(ङ) अहं भोजनाय खादामि ।

## ९. सन्धिविच्छेदं कृत्वा लिखत

| | |
|---|---|
| अनेकैर्महर्षिभिः | विश्वासो विधीयते |
| मनोरमम् | देवा असुरेभ्यः |
| विभाजनानुसारम् | किंवदन्तीभिरस्याः |
| आसीदिति | राजधानीति |
| कथयन्तीतिहासज्ञाः | हिमाद्रयश्च |

| | |
|---|---|
| अद्यापि | अस्मिन्नेव |
| सामग्रीर्दृष्ट्वा | वसन्ततौ |
| सुरम्यास्ति | यत्रैकवारम् |
| धारेयं | मनस्तृप्यति |
| जना विस्मिताः | सहिष्णुतायाश्च |

१०. **प्रदत्तपदानां साहाय्येन चित्रं वर्णयत**



मानयन्ति, किरातसमुदायस्य जनाः, उँभौलीपर्व, शुद्धीकरणस्य कार्यम्, गृहप्राङ्गणादीनां गोमयेन लिम्पनम्, नीरोगितायाः विपत्तिविनाशस्य च कामना, तिसृणां चुल्लीनां पूजा, भूमिस्थानस्य पूजा, नागनागिनीनां पूजा, पुरोहितद्वारा पूजासम्पादनम्, पुष्पपत्रधूपाक्षतकदलीपत्रार्द्रकधनूंषि च पूजासामग्र्यः, पूजासमाप्तिपश्चात् तत्र नर्तनवादनस्य परम्परा ।

११. **सङ्खुवासभामण्डलस्य काश्चन अष्ट विशेषताः लिखत ।**

१२. **सङ्खुवासभामण्डलं किमर्थं सुरम्यमस्ति ? स्वविचारं प्रकटयत ।**

## व्याकरणानुशीलनम्

१. **सत्वसन्धिनियमं पठित्वा उदाहरणं च दृष्ट्वा निर्दिष्टं कार्यं कुरुत**

नियमः - विसर्गस्य पश्चात् कवर्गपवर्गौ विहाय वर्गाणां प्रथमद्वितीयवर्णाः, शषसवर्णाश्च आयान्ति चेत् तत्र विसर्गस्य 'स्' भवति ।

(विसर्गात् च, छ, ट, ठ, त, थ, श, ष, स = विसर्गस्य स्)

उदाहरणम् -

विष्णुः > त्राता - विष्णुस्त्राता

रामः > तत्र - रामस्तत्र

(क) सन्धिं कृत्वा लिखत

नमः + ते - ..................
हरिः + त्रायते - ..................
मानवः + तरति - ..................
मनुः + तु - ..................
बालकाः + सर्वे - ..................
रविः + तिष्ठति - ..................
लक्ष्मीः + तृप्ता - ..................
तैः + सह - ..................
कविः + सरति - ..................
नरः + साधुः - ..................

(ख) सन्धिविच्छेदं कृत्वा लिखत

रामश्चलति - ..................
भानुष्टीकते - ..................
हरिश्शेते - ..................
कृष्णस्तनयायै - ..................
वृक्षस्तत्र - ..................
बालष्षष्ठ्याम् - ..................
गुरुस्ततः - ..................
अनुजस्तत्र - ..................
पूर्वजास्तृप्यन्ति - ..................
भगिन्यस्तावत् - ..................

२. **रुत्वसन्धिनियमं पठित्वा उदाहरणं च दृष्ट्वा निर्दिष्टं कार्यं कुरुत**

नियमः - पदान्तस्य सस्य रु भवति, ततः उकारस्य लोपो भवति, 'र्' इत्यस्य प्रयोगो भवति ।

उदाहरणम्

मनुः + इव - मनुरिव

भानुः + उदेति - भानुरुदेति

**(क) सन्धिं कृत्वा लिखत**

हरिः + गच्छति - ..................
कार्यैः + विविधैः - ..................
मानवैः + अपि - ..................
साधुः + अत्र - ..................
मतिः + भ्रष्टा - ..................
रविः + आनयति - ..................
पतिः + आगत - ..................
पशुः + वर्धते - ..................
तनयाभिः + आनीता - ..................
बालकैः + उक्तम् - ..................

**(ख) सन्धिविच्छेदं कृत्वा लिखत**

अग्रजाभिर्विहितम् - ..................
दानवैरवरोधः - ..................
प्रयासैरुपलब्धः - ..................
विष्णुर्वदति - ..................
भानुर्नयति - ..................
पितुरुपदेशः - ..................
मातुराज्ञा - ..................
शास्त्रैर्निषिद्धः - ..................
भ्रातुरिच्छा - ..................
मित्रैर्गम्यते - ..................

### ३. उपपदविभक्तिविषये कारकविभक्तिविषये च पठत

पदस्य समीपम् उपपदं भवति। कस्यचन पदस्य समीपे यः मूलशब्दः भवति तद् उपपदं भवति।

यथा - विद्यालयं परितः।

अत्र परितः इति एकं पदमस्ति चेत् तस्य समीपे विद्यालयशब्दो वर्तते। अतः विद्यालयशब्द एव उपपदमिति कथ्यते।

इतः बोद्धव्यं यत्, कस्यचन पदस्य प्रयोगे कृते सति मूलशब्दे यस्याः विभक्तेः प्रयोगः भवति सा उपपदविभक्तिः कथ्यते। उदाहरणे विद्यालयशब्दे द्वितीयायाः विभक्तेः प्रयोगः दृश्यते। अतः अत्र द्वितीया विभक्तिः उपपदविभक्तिः वर्तते। एतादृश्याम् अवस्थायां कारकानुसारं विभक्तेः प्रयोगः न भवति। यतः कारकस्य सम्बन्धः क्रियया सह भवति। परन्तु उपपदस्य सम्बन्धः पदेन सह भवति। अत्र विद्यालयस्य सम्बन्धः परितः इति शब्देन सह अस्ति। कारकेषु सम्बन्धं निश्चेतुं क्रियया सह प्रश्नः विधीयते।

यथा

रामः पुस्तकं पठति।

कः पुस्तकं पठति ? - रामः।

रामः किं पठति ? - पुस्तकम्।

अत्र रामस्य पुस्तकस्य च सम्बन्धः क्रियया सह अस्ति। अतः उभयोः शब्दयोः कारकत्वं स्वीक्रियते। परन्तु, विद्यालयं परितः वृक्षाः सन्ति अत्र प्रश्ने विहिते सति किं परितः भवति ? विद्यालयस्य सम्बन्धः परितः इति पदेन सह अस्ति, सन्ति इति पदेन सह नास्ति, वृक्षशब्दस्य सम्बन्धः क्रियया सह अस्ति। अत्र वृक्षाः कारकमस्ति चेत् विद्यालयं उपपदम् अस्ति। परितः शब्दस्य योगे द्वितीया विभक्तिः कर्तव्या।

एवंप्रकारेण कतिपयेषु शब्देषु निश्चितविभक्तीनां प्रयोगः कर्तव्यः।

अधस्तनानां शब्दानां योगे उपपदविभक्तिः द्वितीया भवति -

परितः, अभितः, उभयतः, प्रति, समया, विना (विनाशब्दस्य योगे तृतीयायाः विभक्तेश्च प्रयोगः भवति।)

यथा

विद्यालयं परितः वृक्षाः सन्ति। क्षेत्रम् अभितः मार्गः अस्ति। गृहम् उभयतः वाटिका अस्ति। जननीं प्रति श्रद्धा कर्तव्या। सीतां समया रमा अस्ति। कार्यं विना उपलब्धिः न भवति।

अधस्तनानां शब्दानां योगे उपपदविभक्तिः तृतीया भवति -

सह, अलम्, विना, पृथक्

अनुजा त्वया सह पठति । श्रमेण अलम् । रामेण विना श्यामः भ्रमणार्थं न गच्छति । पुत्रेण पृथक् माता न जीवति ।

अधस्तनानां शब्दानां योगे उपपदविभक्तिः चतुर्थी भवति -

नमः, स्वस्ति, स्वाहा, हितम्

नमः शिवाय । सर्वेभ्यः स्वस्ति । अग्नये स्वाहा । मानवाय हितं पथ्यभोजनम् ।

अधस्तनानां शब्दानां योगे उपपदविभक्तिः पञ्चमी भवति -

बहिः, आरभ्य, पूर्वः, ऋते

गृहाद् बहिः विडालः अस्ति । श्रावणमासाद् आरभ्य कार्यं प्रचलति । नगराद् पूर्वः वनम् अस्ति । सत्याद् ऋते न वक्तव्यम् ।

अधस्तनानां शब्दानां योगे उपपदविभक्तिः षष्ठी भवति -

दूरम्, निकटम्, सदृशम्, समीपम्

विद्यालयस्य दूरं नगरम् अस्ति । वनस्य निकटं तडागः अस्ति । चन्द्रस्य सदृशं मुखमस्ति । मम समीपं मित्रमस्ति ।

### ४. उचितोपपदविभक्तिं प्रयुज्य लिखत

.................. उभयतः (विद्यालय)

.................. दूरम् (वन)

.................. बहिः (नगर)

.................. नमः (गणेश)

.................. अलम् (विवाद)

.................. सदृशम् (सूर्य)

.................. स्वस्ति (मानव)

.................. ऋते (ज्ञान)

.................. सह (रमा)

.................. प्रति (गुरु)

## रचनात्मकः अभ्यास

१.  यात्रावर्णनं लिखित्वा कक्षायां श्रावयत ।

२.  स्वस्थानीयस्य पर्यटकीयस्थलस्य विषये अनुच्छेदं रचयत ।

३.  पठनाभ्यासस्य तृतीयचतुर्थपञ्चमप्रश्नेषु प्रदत्तान् गद्यांशान् आधारीकृत्य एकस्यैव स्थानस्य कस्मिन् कस्मिन् पुराणे चर्चा विहिता अस्ति ? लिखत ।

४.  उपपद्विभक्तिं प्रहर्य स्वस्थ विद्यालयं वर्णयत ।

### श्रवणपाठः

विष्णुप्रसादज्ञवालीविद्वद्वर्येण 'पुराणेषु नेपालविषयकं विवेचनात्मकमध्ययनम्' इति पुस्तकं विरचितं वर्तते । तेन तस्मिन् पुस्तके केषु पुराणेषु नेपालस्य तीर्थपर्वादीनां कथमुल्लेखः अस्ति इति निर्दिष्टं वर्तते । पुराणानां श्लोकान् उद्धृत्य तेन विषया उपस्थापिताः सन्ति । तस्मिन् पुस्तके नेपालस्य विविधस्थानानां विषये पुराणेषु चर्चा प्राप्यत इति प्रदर्शितमस्ति । अतः नेपालेन पौराणिकमहत्त्वं प्राचीनकालादेव रक्षितमिति तत्र प्रतिपादितं वर्तते । यतो नेपालोऽनेकेषाम् ऋषीणां जन्मभूमिरूपेण, बहूनां मुनीनां कर्मभूमिरूपेण च प्रसिद्धः अस्त्येव । अस्मिन् देशे अनेके महर्षयो ज्ञानं प्राप्नुवन् चेद् अनेके ज्ञानमयच्छन् । उत्तरस्य शालग्रामक्षेत्राद् दक्षिणस्य मिथिलाक्षेत्रपर्यन्तं तथा हि पश्चिमस्य मानसखण्डाद् पूर्वस्य मेचीपर्यन्तं तादृशानि बहूनि स्थानानि सन्ति यानि सांस्कृतिकं, पौराणिकं च गौरवं वर्धयन्ति एव । पुराणेषु अवतारकथा लभ्यन्ते । तासां कथानां विविधाः प्रसङ्गाः नेपालान्तर्गतस्थानसम्बद्धाः सन्ति । पुस्तके स्थाननामानि निर्दिश्य नेपालस्य चर्चा विहिता दृश्यते । पश्चादपि साधवस्तेषु स्थानेषु गत्वा महर्षय इव तपश्चर्याम् अकुर्वन् इति तु इतिहासस्य प्रामाण्यं स्वीक्रियत एव ।

दशमः पाठः

# वाङ्मनःप्राणस्वरूपम्

## पाठप्रवेशः



अधुना विश्वस्मिन् मानवशरीरस्य विषये बहु अध्ययनं अनुसन्धानं च भवति। वैज्ञानिकाः प्रयोगशालासु प्रतिदिनं परीक्षणं कुर्वन्ति, नवीनानि तथ्यानि च प्रकाशयन्ति। शरीरस्य विषये न केवलम् अधुनैव अपि तु वैदिकवाङ्मयेष्वपि चर्चा लभ्यते। वेदे बहुत्र शरीरस्य, मनसः, अवयवानां च शुद्धेर्विषये चर्चा वर्तते। वाक्प्राणचक्षुरादीनामवयवानां च शुद्धतायै वेदे बहवो मन्त्राः प्रयुक्ता दृश्यन्ते। ब्राह्मणग्रन्थेषु, आरण्यकेषु, उपनिषत्सु च बहुत्र मानवशरीरस्य अवयवानां च विषये कथाः लभ्यन्ते। विशेषत आयुर्वेदे, योगशास्त्रे च मनुष्यशरीरस्य ऊहापोहं वर्णितं विद्यते। शरीरस्य रक्षायै अस्माभिः किं कर्तव्यम्? शरीरे रोगाः कथमुत्पद्यन्ते? तेषां निराकरणाय च किं कर्तव्यम्? इत्यादिविषये आयुर्वेदे चर्चा प्राप्यते। पुराणादौ अपि बहुत्र शरीरस्य मनसश्च शुद्धताया विषये उल्लेखः। अनुसन्धातृभिः महर्षिभिर नुसन्धानद्वारा निःसारितानां तथ्यानां प्रकाशनं वाङ्मयेषु विहितं विद्यते। वैदिकवाङ्मयस्य, पुराणादीनाम्, आयुर्वेदस्य, योगशास्त्रस्य चाध्ययनेन शरीरस्य विषयेऽपि बहु ज्ञातुं शक्यते।

अहिले विश्वमा मानवशरीरको विषयमा धेरै अध्ययन र अनुसन्धान हुन्छ। वैज्ञानिकहरू प्रत्येक दिन प्रयोगशालामा नयाँ नयाँ परीक्षण गर्छन्। नयाँ नयाँ तथ्यहरू पत्ता लगाउँछन्। शरीरको विषयमा अहिले मात्र होइन, वैदिक वाङ्मयमा नै चर्चा पाइन्छ। वेदमा धेरै ठाउँमा शरीर, मन र अरू अङ्गहरूको शुद्धताको विषयमा चर्चा पाइन्छ। वाणी, प्राण, आँखा आदि अङ्गको शुद्धिका लागि धेरै मन्त्रहरू प्रयोग गरिएका छन्। ब्राह्मणग्रन्थ, आरण्यक र उपनिषद्‌मा पनि धेरै ठाउँमा मानव शरीरको र अवयवको विषयमा कथा पाइन्छ। विशेष गरी आयुर्वेद र योगशास्त्रमा मनुष्यशरीरको सम्पूर्ण विश्लेषण पाइन्छ। शरीरको रक्षाका लागि हामीले के गर्नुपर्छ? शरीरमा रोग कसरी लाग्छ? तिनीहरूको समाधान कसरी हुन्छ? आदि विषयमा आयुर्वेदमा चर्चा पाइन्छ। पुराणहरूमा पनि शरीर र मनको शुद्धताको विषय उल्लेख्य मात्रामा पाइन्छ। अनुसन्धाता महर्षिहरूले अनुसन्धानबाट पत्ता लगाएका शरीरसम्बद्ध धेरै तथ्य वाङ्मय ग्रन्थहरूमा प्रकाशन गरेका छन्। तसर्थ वैदिक वाङ्मय, पुराण तथा योगशास्त्रको अध्ययन गर्नाले शरीरको विषयमा धेरै ज्ञान हुन्छ।

## वाङ्मनःप्राणस्वरूपम्

श्वेतकेतुः ऋषेः आरुणेः पुत्र आसीत् । स गुरुकुलं शिक्षां समाप्य गृहं प्रत्यागच्छन् । गुरुकुले अनधिगता विद्याश्च स पितुः सकाशादधीतवान् । आरुणिः स्वपुत्रं रहस्यमयं ज्ञानमुपदिशति स्म । श्वेतकेतुरपि पितरमनेकान् प्रश्नान् पृच्छति स्म । आरुणिरपि तस्य प्रश्नानां यथोचितमुत्तरं ददाति स्म ।



एकवारं श्वेतकेतुर्मनसो विषये ज्ञातुमैच्छत् । स पितरमपृच्छत् पृष्टवान्, "अस्माकं शरीरे मनो वर्तते । मनसो विकासः कथं भवति ?" इति । शरीरविज्ञानस्य विषये पुत्रस्य एतादृशं प्रश्नं श्रुत्वा आरुणिः प्रसन्नोऽभवत् । सोऽवदत्, "यदन्नमशितं भवति, तद्द्वारैव अस्माकं मनसः, प्राणस्य, वाचोऽपि विकासो भवति ।"

एतच्छ्रुत्वा श्वेतकेतुश्चकितः सञ्जातः । "अस्माभिरशितम् अन्नं तु पाचनादिप्रक्रियया विनष्टं भवति । अन्नद्वारा शरीरस्य वृद्धिर्भवति इत्यपि श्रुतमेव । किन्तु मनः ? अन्नेन मनसो विकासः कथं सम्भवति ?" इति विचार्य स पितरं पुनरवोचत्, "अन्नद्वारा शरीरस्य पुष्टिर्भवति इति तु श्रुतमेव । किन्तु अन्नेनैव मनसो निर्माणं भवतीति मया न श्रुतं कदापि, न वाऽनुभूतम् । कृपया सुस्पष्टं विज्ञापयतु ।" इति ।

श्वेतकेतोरेतादृशीं जिज्ञासां श्रुत्वा स्मितवदनः सन् आरुणिः अकथयत्, "अस्माकं शरीरमन्नेन वर्धते इति तु त्वं जानास्येव । मनसोऽपि विकासः अन्नेनैव भवति । त्वं यदन्नम् अश्नासि तदन्नं त्रेधा विभज्यते ।

तस्य यः स्थूलांऽशो भवति, तत् पुरीषं भवति । यो मध्यमांशो भवति तेनास्माकं शरीरे मांसस्य विकासो जायते । तस्यैव अन्नस्य अणिष्ठोंऽशो मनोरूपेण परिणमते ।" एतच्छ्रुत्वा श्वेतकेतुः प्रसन्नोऽभवत् । किन्तु अन्नस्य विभागः कथं जायते ? इत्यत्र तस्य संशयोऽजायत । स पुनरन्नस्य विभागविषये ज्ञातुमैच्छत् ।

आरुणिः श्वेतकेतोर्विस्मयान्वितं मुखं दृष्ट्वा पुनः उदाहरणमुखेन अकथयत्, "दध्नोः मथनं तु त्वया दृष्टमेव । तत्र दध्नि मथ्यमाने ऊर्ध्वं समायात अणिष्ठोंऽश एव सर्पिर्भवति । यथा दध्नो थनादिद्वारा संस्कारो विधीयते, तथैव जठराग्निना अस्माभिरशितस्य अन्नस्य मथनं भवति । तयैव प्रक्रियया अन्नस्य स्थूलांशः, मध्यमांशः, सूक्ष्मांशश्च पृथग् विधीयते । तत्र यः सूक्ष्मांशः भवति, सः ऊर्ध्वं समुदीषति । तेनैव अस्माकं मनोः निर्मितं पुष्टञ्च भवति ।"

एतच्छ्रुत्वा श्वेतकेतुः सन्तुष्टोऽभवत् । स पुनः प्राणस्य, वाचश्च विषये ज्ञातुम् ऐच्छत् । आरुणिश्च तस्य उत्तरमवदत्, "यथास्माकं मनः अन्नेन निर्मितं भवति, तथास्माकं प्राणो जलेन पुष्टं भवति । अस्माभिरशितं जलमपि त्रेधा विभज्यते । तस्य स्थूलांशेन मूत्रं जायते, मध्यमांशेन रक्तमुत्पद्यते अणिष्ठांशेन च प्राणः सञ्जायते । एवमेव वाक् च तेजसा निर्मीयते ।"

एतेन श्वेतकेतुः पुनरुक्तवान्, "तेजः अस्माभिः कथमुपभुज्यते, येनास्माकं वाचो निर्माणं भवति ?"

श्वेतकेतोर्जिज्ञासां श्रुत्वा आरुणिः स्मितमुखेन उदतरत्, "साधूक्तं पुत्र ! तेजो न केवलं सूर्यादीनाम् एव ग्रहणं भवति । तेजोवर्द्धकं घृतादिकमपि तेजोरूपमेव भवति । तेजोरूपस्य घृतादेरपि पाचनप्रक्रियाद्वारा त्रेधा विभागो भवति । तस्य च स्थूलांशः अस्थि भवति, मध्यमांशो मज्जा भवति, अणिष्ठश्च अंशो वाग् भवति ।"

श्वेतकेतोः प्रसन्नं मुखं दृष्ट्वा आरुणिरवदत्, "किं सम्यग् विज्ञातं वा ? प्रसन्नो दृश्यसे ।" श्वेतकेतुरकथयत्, "आम् ! अधुना अहं सम्यग् ज्ञातवान् ।"

"तर्हि एकवारं निष्कर्षं कथयतु, किं त्वया विज्ञातम् ?" आरुणिरपृच्छत् ।

श्वेतकेतुरवदत्, "मया सम्यग् विज्ञातम् यद्, मनः अन्नमयम्, प्राण आपोमयः, वाक् च तेजोमयी भवतीति ।"

श्वेतकेतोरेतादृशं समीचीनमुत्तरं श्रुत्वा आरुणिरतीव प्रसन्नोऽभवत् । शरीरस्य एतादृशं रहस्यमयं स्वरूपं ज्ञात्वा श्वेतकेतुरपि चकितः प्रसन्नश्चाभवत् ।

आरुणिः शिक्षितानां विषयाणां प्रयोगात्मकं परीक्षणमपि कारयति स्म । अतः स "मनः अन्नमयं भवति" इति विषये परीक्षणं कर्तुमिष्टवान् । अतः स स्वपुत्रं श्वेतकेतुमकथयत्, "पुत्र ! एतस्य परीक्षणं करवाव । तथा सति तव ज्ञानं दृढं भवति । नरः षोडशकलात्मको भवति । त्वं पञ्चदश अहानि अन्नं न भुङ्क्ष्व केवलं जलं पिब । जलं पिबतः प्राणो न विच्छेत्स्यते । इति ।"

श्वेतकेतुरपि पितुराज्ञां पालयामास । स पञ्चदशदिवसान् यावद् किञ्चिदपि अन्नं न भुक्तवान् । पञ्चदशदिवसेभ्यः पश्चात् स पितुः समक्षं गत्वा उक्तवान्, "मम पञ्चदशदिनानि अन्नेन विना व्यतीतानि । इतः परं मया किं कर्तव्यम् ?" इति । आरुणिः उक्तवान्, "त्वया वेदाः अधीताः ? अधुना त्वम् ऋचः, यजूंषि, सामानि च स्मरसि ? मन्त्रान् वदतु ।" इति । श्वेतकेतुः उक्तवान्, "अहं न किमपि स्मरामि । न वै मां वेदा अधुना प्रतिभान्ति । इति ।"



एतच्छ्रुत्वा आरुणिः अवोचत्, 'हे सौम्य ! पञ्चदशभ्यो दिवसेभ्यः त्वया अन्नं भुक्तं नास्ति । अतोऽधुना तव मनः शिथिलमस्ति । मनः, बुद्धिः, चित्तम्, अहङ्कारः इति सर्वे मनस एव विभागाः सन्ति । अतस्त्वम् अधुना किमपि स्मर्तुं न शक्नोसि ।' पितुरेतादृशेन परीक्षणेन श्वेतकेतुर्विस्मितोऽभवत् । "बुभुक्षितं न प्रतिभाति किञ्चित्" इति लोकोक्तेः अनुभवात्मकं ज्ञानं तेनानुभूतम् ।

आरुणिः पुनरकथयत्, "महतोऽप्यग्नेः यदा खद्योतमात्रः अङ्गारोऽवशिष्यते, स बहु दग्धुं न शक्नोति । एवं तव मनसोऽपि षोडशसु कलासु एकैव कला अवशिष्टा वर्तते । अतः त्वं किमपि न जानासि । अन्नमशान, पुनः स्मरसि । इति ।"

पितुराज्ञानुसारं श्वेतकेतुः अन्नमशितवान् । ततः सः पितुः समक्षमगच्छत् । पिता आरुणिः पुनः वेदमन्त्रानपृच्छत् । स सर्वं यथोचितम् अवदत् । आरुणिरुक्तवान्, "सौम्य ! यथाऽग्नेः खद्योतमात्रमङ्गारं तृणैः संयोज्य पुनः अग्निर्ज्वालयितुं शक्यते, तेन बहु दाहः सम्भवति, तथैव अवशिष्टा तव मनस एका कला अन्नेन सा पुनः पुष्टा बभूव । अधुना त्वं सर्वं स्मरसि ।"

एतच्छ्रुत्वा श्वेतकेतुः प्रसन्नो बभूव । आरुणिरुवाच, "किम् अधुना त्वया मनसः, प्राणस्य, वाचश्च विषये रहस्यं विज्ञातम् ?" तत् श्रुत्वा श्वेतकेतुः, "सम्यग् विज्ञातम्" इत्युक्त्वा प्रसन्नोऽभवत् ।

श्वेतकेतु आरुणि ऋषिका छोरा थिए । उनी गुरुकुलमा आफ्नो अध्ययन सकेर घर फर्किए । गुरुकुलमा गुरुबाट नसिकेका विद्याहरू उनले पिताबाट लिए । आरुणि आफ्ना पुत्र श्वेतकेतुलाई विभिन्न रहस्यमय ज्ञानहरू बताउँथे । श्वेतकेतु पितालाई अनेकौं प्रश्न सोध्थे । पिता आरुणि उनका प्रश्नहरूको उचित उत्तर दिन्थे ।

एकपटक श्वेतकेतुलाई मनको बारेमा जान्ने इच्छा भयो । उनले पितालाई सोधे, "हाम्रो शरीरमा मन हुन्छ, यसको विकास कसरी हुन्छ ?" शरीरविज्ञानको बारेमा आफ्ना छोराको प्रश्न सुनेर आरुणि अत्यन्त खुसी भए । उनले भने, "हामीले जे उपभोग गर्छौं, त्यसबाट नै हाम्रो मन, प्राण र वाणीको विकास हुन्छ ।"

पिताको कुरा सुनेर श्वेतकेतु आश्चर्यचकित भए । खाएको अन्न त पचेर दिसा बन्छ र नष्ट हुन्छ । अन्नद्वारा नै शरीरको वृद्धि हुनेसम्म त सुनिएकै हो, तर मन ? अन्नबाट नै मनको विकास हुने कुरा त सम्भव कसरी हुन्छ र ? यस्तो विचार गरी उनले पितालाई फेरि सोधे, "अन्नबाट शरीरको पुष्टि हुन्छ भन्ने त सुनिएको हो । तर अन्नबाट नै मनको विकास हुन्छ भन्ने चाहिँ सुनिएको थिएन । न त अनुभव नै गरिएको छ । कृपया स्पष्ट पारिदिनुहोस् ।"

श्वेतकेतुको यस्तो जिज्ञासा सुनेर आरुणि मुस्कुराए । उनले भने, "हाम्रो शरीर अन्नले बढ्छ भन्ने त तिमीलाई थाहै छ । मन पनि त अन्नबाट नै विकसित हुने हो । तिमी जुन अन्न खान्छौ त्यो तीन भागमा बाँडिन्छ । त्यसको ठुलो भाग दिसा बनेर नष्ट हुन्छ । मध्यम भागबाट हाम्रो शरीरमा मासुको विकास हुन्छ, अनि सूक्ष्म भाग चाहिँ मनको रूपमा परिणत हुन्छ ।" यो सुनेर श्वेतकेतु प्रसन्न भए । तर अन्न यसरी बाँडिने विषयमा उनलाई अझै स्पष्ट भएन । अनि अन्न कसरी बाँडिन्छ ? यस विषयमा प्रश्न गरे ।

आरुणिले श्वेतकेतुको चकित अनुहार देखे । अनि उदाहरण दिएर स्पष्ट पार्न खोज्दै भने, "दही मथेको त तिमीले देखेकै छौ । दही मथ्ने बेलामा त्यसको सूक्ष्म अंश माथि उत्रिन्छ । त्यही घिउ" बन्छ । दही मथेर घिउ छुट्टिन्छ । हाम्रो शरीरभित्र पनि पाचन प्रणाली छ । त्यसले हाम्रो अन्नलाई पचाउने काम गर्छ । त्यसबाट नै अन्नको स्थूल, मध्यम र सूक्ष्म अंश छुट्टिन्छ । त्यसमध्ये सूक्ष्म अंश माथि उत्रिन्छ र त्यसबाट नै मन विकसित हुन्छ ।"

यो सुनेर श्वेतकेतु सन्तुष्ट भए । उनले फेरि प्राण र वाणीका बारेमा पनि जान्ने इच्छा व्यक्त गरे । आरुणिले पनि उनका प्रश्नको उत्तर दिँदै गए, "जसरी हाम्रो मन अन्नबाट निर्मित हुन्छ, त्यसरी प्राण जलबाट पुष्ट हुन्छ । हामीले पिएको जल पनि तीन भागमा बाँडिन्छ । तीमध्येको स्थूल अंश मूत्र बन्छ, मध्यम अंश रगत बन्छ अनि सूक्ष्म अंशचाहिँ प्राण बन्दछ । यसैगरी वाणी तेजबाट निर्मित हुन्छ ।"

श्वेतकतुले फेरि सोधे, "तेज चाहिँ हामीले कसरी खान्छौं, जसबाट हाम्रो वाणी विकसित हुन्छ ?"

आरुणिले उनको जिज्ञासाको मुस्कुराउँदै उत्तर दिए, "उचित प्रश्न गऱ्यौ पुत्र ! तेज भनेको कहाँ सूर्य आदि मात्र हो र ? हाम्रो शक्ति बढाउने घिउ" आदि पनि तेज नै हो । तेजरूपी घिउ" आदिको पनि पाचनप्रक्रियाबाट त्यसैगरी तीन भाग छुट्टिन्छ । तीमध्ये स्थूल भाग हाड, मध्यम भाग मज्जा र सूक्ष्म भाग चाहिँ वाणी हुन्छ ।"

श्वेतकेतुको प्रसन्न मुहार देखेर आरुणिले भने, "राम्ररी बुझ्यौ ? खुसी देखियौ त ।" श्वेतकेतुले उत्तर दिए, "हजुर, अहिले राम्ररी बुझेँ ।"

"त्यसो भए मलाई निष्कर्ष बताऊ, के बुझ्यौ ?" आरुणिले भने ।

श्वेतकेतुले भने, "मैले राम्ररी के बुझेँ भने मन अन्नबाट, प्राण जलबाट र वाणी तेजबाट विकसित हुन्छन् ।"

श्वेतकेतुको यस्तो उत्तर सुनेर आरुणि अत्यन्त खुसी भए । शरीरको यस्तो रहस्यमय स्वरूप जानेर श्वेतकेतु पनि प्रसन्न र चकित भए ।

आरुणि सिकाएका विषयको प्रयोगात्मक परीक्षण पनि गराउने गर्थे । त्यसकारण उनले मन अन्नका कारण पुष्ट हुने तथ्यको प्रयोगात्मक परीक्षण गराउने विचार गरे । उनले श्वेतकेतुलाई भने, "हे पुत्र ! यसको परीक्षण गरौँ । त्यसो भएपछि झन् तिम्रो ज्ञान बलियो हुन्छ । मानिसका जम्मा सोह्र कला हुन्छन् । तिमी पन्ध्र दिन अन्न नखाऊ, पानी मात्र पिएर बस । पानी टन्न पिउने मान्छेको प्राण जाँदैन ।"

श्वेतकेतुले पनि पिताको आज्ञाको पालना गरे । उनले पन्ध्र दिनसम्म केही पनि भोजन गरेनन् । पन्ध्र दिनपछि उनी पिताको नजिक गए र भने, "मैले पन्ध्र दिन अन्न नखाई बिताएँ । अब म के गरौँ ?" आरुणिले भने, "तिमीले वेद पढेका छौ ? मलाई अब ऋग्वेद, यजुर्वेद र सामवेदका सबै मन्त्र सुनाऊ ।" श्वेतकेतुले भने, "म केही पनि सम्झिन सक्दिनँ । मलाई वेदका कुनै मन्त्र पनि आइरहेका छैनन् ।"

यो सुनेर आरुणिले भने, "बाबु ! पन्ध्र दिनदेखि तिमीले केही पनि अन्न खाएका छैनौ । त्यसकारण तिम्रो मन शिथिल छ । मन, बुद्धि, चित्त र अहङ्कार मनकै रूप हुन् । तिम्रो बुद्धि क्षीण भएकाले तिमी केही पनि सम्झिइरहेका छैनौ ।" पिताको यस्तो परीक्षण सुनेर श्वेतकेतु आश्चर्यचकित भए । "भोकाएको मान्छेले केही सम्झिन सक्दैन" भन्ने लोकोक्तिको अनुभवात्मक ज्ञानको अनुभव उनलाई भयो ।

आरुणिले भने, "ठुलो आगोको पनि जब जुनकिरीजत्रो झिल्को मात्र रहन्छ, त्यसले धेरै डढाउन सक्दैन । त्यसैगरी मनको पनि सानो अंश मात्र तिमीसित छ । त्यसकारण तिमी केही सम्झिरहेका छैनौ । अन्न खाऊ, फेरि सम्झिने छौ ।"

श्वेतकेतुले पिताको आज्ञाअनुसार अन्न खान थाले । केही समयपछि उनी पिता समक्ष गए । पिताले फेरि वेदका मन्त्रहरू सोधे । यसपटक उनले पितालाई सबै सुनाए । आरुणिले भने, "बाबु ! जसरी आगोको सानो झिल्कोलाई पनि सुकेका घाँसपात, दाउरा आदि जोडेर फेरि बाल्न सकिन्छ, त्यसबाट ठुलो कुरा जल्न पनि सक्छ, त्यसैगरी मनको पनि तिम्रो थोरै अंश बाँकी थियो । अन्नद्वारा त्यो फेरि पुष्ट भयो । त्यसकारण तिमी अहिले सबै सम्झिन सक्छौ ।"

यो सुनेर श्वेतकेतु प्रसन्न भए । आरुणिले भने, "अब तिमीले मन, प्राण र वाणीको रहस्य बुझ्यौ त ?" श्वेतकेतुले भने, "हजुर राम्ररी बुझेँ ।" यसो भनेर श्वेतकेतु मुसुक्क मुस्कुराए ।

## शब्दार्थः

| शब्दः | संस्कृते अर्थः | नेपाल्याम् अर्थः | आङ्गलभाषाम् अर्थः |
|---|---|---|---|
| समाप्य | समापनं कृत्वा | सकेर | After finishing |
| अनधिगताः | अप्राप्ताः | नपाइएका | Not found |
| अधीतवान् | अध्ययनं कृतवान् | पढे | Studied |
| यथोचितम् | उपयुक्तम् | उपयुक्त | Suitable |
| ऐच्छत् | इष्टवान् | इच्छा गरे | Wished |
| अपृच्छत् | पृष्टवान् | सोधे | Asked |
| अशितम् | भुक्तम् | खाइएको | Eaten |
| सुस्पष्टम् | स्पष्टतया | स्पष्टसँग | Clearly |
| अश्नासि | खादसि | खान्छौ | You eat |
| त्रेधा | त्रिषु भागेषु | तीन भागमा | In three Parts |
| अणिष्ठः | सूक्ष्मतमः | सबैभन्दा सूक्ष्म | The smallest |
| परिणमते | परिणतं भवति | परिणत हुन्छ | Turns out |
| मथनम् | विलोडनम् | मथ्ने काम | Churning |
| सर्पिः | घृतम् | घिउ | Ghee |
| समुदीषति | समुद्गच्छति | माथि उत्रिन्छ | Descends |

| | | | |
|---|---|---|---|
| अस्थि | कीकसम् | हाड | Bone |
| मज्जा | अस्थिसारः | मज्जा (मासी) | Bone marrow |
| निष्कर्षः | सारः | निष्कर्षः | Conclusion |
| न भुङ्क्ष्व | न अशान | नखाऊ | Don't eat |
| विच्छेत्स्यते | वियोक्ष्यते | छुट्ने छैन | Will not break |
| व्यतीतानि | विगतानि | बिताइए | Spent |
| ऋचः | ऋग्वेदमन्त्राः | ऋचाहरू | Mantras of the Veda |
| यजूंषि | यजुर्वेदमन्त्राः | यजुर्वेदका मन्त्रहरू | Mantras of Yajurveda |
| सामानि | सामवेदमन्त्राः | सामवेदका मन्त्रहरू | Mantras of Samaveda |
| प्रतिभान्ति | स्फुरन्ति | फुर्छन् | To Occur in the mind |
| शिथिलम् | मन्दम् | कमजोर | Weak |
| बुभुक्षितः | क्षुधितः | भोकाएको | Hungry |
| अशान | भुङ्क्ष्व | खाऊ | Eat please |

## अभ्यासः

### श्रवणं भाषणं च

१. **पाठस्य कथां शिक्षकस्य मुखाच्छृणुत, अज्ञातार्थानां शब्दानामङ्क्त्या रेखाङ्कनं च कुरुत ।**

२. **पाठस्य कथाया अनुच्छेदान् एकैकश उच्चारयत । एकस्य पठने जातास्त्रुटीरन्ये निराकुरुत ।**

३. **अधस्तनानां पदानां सम्यगुच्चारणं कुरुत**

अनधिगताः, शरीरविज्ञानस्य, पाचनादिप्रक्रियाद्वारा, अश्नासि, मथनादिद्वारा, सूक्ष्मांशश्च, अणिष्ठांशश्च, तेजोवर्द्धकम्, षोडशकलात्मकः, अनुभवात्मकम्

४. **पाठस्य तृतीयमनुच्छेदं शिक्षकस्य मुखात् श्रुत्वा अनूच्चारयत ।**

५. **पाठस्य कथायां कस्मिन् विषये चर्चा विहिता वर्तते ? कथयत ।**

६. **पाठस्य चतुर्थमनुच्छेदं श्रुत्वा उत्तरयत**

(क) श्वेतकेतोर्जिज्ञासां श्रुत्वारुणिः किं कृतवान् ?

(ख) शरीरं केन वर्धते ?

(ग) अशितम् अन्नं कतिधा विभज्यते ?

(घ) अन्नस्य क अंशः पुरीषं भवति ?

(ङ) मांसस्य विकासः अन्नस्य केनांशेन जायते ?

(च) अन्नस्य कोंऽशः मनोरूपेण परिणमते ?

(छ) श्वेतकेतुः पुनः कस्मिन् विषये ज्ञातुम् ऐच्छत् ?

## ७. अधस्तनस्य अनुच्छेदस्य स्वमातृभाषायामर्थं वदत

आरुणिः शिक्षितानां विषयाणां प्रयोगात्मकं परीक्षणमपि कारयति स्म । अतः स 'मनः अन्नमयं भवति' इति विषये परीक्षणं कर्तुमिष्टवान् । अतः स्वपुत्रं श्वेतकेतुमकमथयत, "पुत्र ! एतस्य परीक्षणं करवाव । तथा सति तव ज्ञानं दृढं भवति । नरः षोडशकलात्मको भवति । त्वं पञ्चदश अहनि अन्नं न भुङ्क्ष्व, केवलं जलं पिब । जलं पिबतः प्राणो न विच्छेत्स्यते । इति ।"

## ८. अधस्तनानां पदानामर्थं कथयत

समाप्य, एतादृशम्, सुस्पष्टम्, विस्मयान्वितम्, स्मितमुखेन, रहस्यमयम्, शिथिलम्, ज्वालयितुम्

## ९. कः कमुक्तवान् ? वदत

(क) मनसो विकासः कथं भवति ?

(ख) त्वम् यदन्नम् अश्नासि तदन्नं त्रेधा विभज्यते ।

(ग) तेजः अस्माभिः कथम् उपभुज्यते, येनास्माकं वाचो निर्माणं भवति ?

(घ) त्वं पञ्चदश अहनि अन्नं न भुङ्क्ष्व, केवलं जलं पिब ।

(ङ) न वै मां वेदा अधुना प्रतिभान्ति ।

## १०. अधस्तनश्लोकान् सम्यग् उच्चारयत, तेषां मातृभाषायामर्थं च वदत

(क) प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥

(ख) वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ?

(ग) चिन्ता चितासमा प्रोक्ता बिन्दुमात्रं विशेषता ।
सजीवं दहते चिन्ता निर्जीवं दहते चिता ॥

(क) प्रसन्नता भएपछि सम्पूर्ण दुःखहरूको नाश हुन्छ । प्रसन्न चित्त भएको मान्छेमा छिट्टै बुद्धि प्राप्त हुन्छ ।

(ख) हामी बोक्रा लगाएर खुसी छौँ, तिमी महँगा दोसल्ला ओढेर खुसी छौ । तर हामी दुईको सन्तुष्टि या खुसीमा खासै भिन्नता छैन । वास्तवमा त्यही व्यक्ति दरिद्र हो, जसको मनमा अनेकौँ तृष्णा (चाहना) छन् । मन सन्तुष्ट भइसकेपछि को धनी र को गरिब ?

(ग) चिन्ता चितासमान हुन्छ । यिनीहरूबिच केवल एउटा बिन्दुको मात्र फरक छ । चिन्ताले जिउँदो मान्छेलाई जलाउँछ र चिताले मरेको मान्छेलाई जलाउँछ ।

११. श्रवणपाठं श्रुत्वा सारं वदत ।

## पठनम्

१. पाठस्य सर्वाननुच्छेदान् एकैकशः पठत, एकस्य पठनमन्ये शृणुत ।

२. पाठं पठित्वा उत्तरं कथयत

(क) श्वेतकेतुः कस्य पुत्रः आसीत् ?

(ख) अस्माकं मनः केन परिपुष्टं जायते ?

(ग) अस्माभिरशितमन्नं, जलम्, तेजो वा कतिधा विभज्यते ?

(घ) तेजसः सूक्ष्मतमोंऽशः केन रूपेण परिणमते ?

(ङ) किमन्नमयम्, किं जलमयम्, किं च तेजोमयम् ?

(च) पुरुषस्य कति कलाः भवन्ति ?

(छ) श्वेतकेतुः कति दिनानि अन्नेन विना यापितवान् ?

३. पाठस्य मौनपठनं विधाय रिक्तस्थानानि पूरयत




४. असत्यवाक्यानि सत्यानि कृत्वा श्रावयत

(क) आरुणिः श्वेतकेतोः भ्राता आसीत् ।

(ख) अस्माकं मनः तेजोमयं भवति ।

(ग) जलस्य सूक्ष्मतमोंऽशः वाग् भवति ।

(घ) जलं पिबतो जनस्य प्राणाः शीघ्रं विच्छेत्स्यन्ते ।

(ङ) श्वेतकेतुः स्वस्य पितुराज्ञां न स्वीकरोति ।

५. **कथाक्रमं मेलयत**

( ) श्वेतकेतुः गुरुकुलस्य अध्ययनं समाप्तवान् ।

( ) आरुणिः मनसः विकासः कथं भवति इति उपदेशं कृतवान् ।

( ) श्वेतकेतुः आरुणेः पुत्रः आसीत् ।

( ) श्वेतकेतुः पञ्चदश दिनानि अन्नेन विना यापितवान् ।

( ) आरुणिः अन्नेन मनः पुष्टं भवतीति परीक्षितुमैच्छत् ।

( ) श्वेतकेतुः मनसो विषये ज्ञातुमैच्छत् ।

( ) श्वेतकेतुः अन्नम् अशितवान्, वेदमन्त्रान् अस्मरत् ।

( ) श्वेतकेतुः सर्वान् वेदमन्त्रान् विस्मृतवान् ।

६. **अन्नस्य मनसा सह कीदृशः सम्बन्धो भवति ? पाठस्याधारेण लिखत ।**

७. **'अन्नमयं मनः, आपोमयः प्राणः, तेजोमयी वाग्' इति विषयं कथामाध्यमेन कक्षायां स्पष्टीकुरुत ।**

८. **कथायाः सारांशं स्वकीयेषु वाक्येषु वदत ।**

९. **अधस्तनं गद्यं पद्यं च पठित्वा भाषिककार्याणि कुरुत**

अस्माकं शरीरे सप्त धातवः भवन्ति । रसः, रक्तम्, मांसम्, मेदः, अस्थि, मज्जा, शुक्रम् चेति सप्त धातव उच्यन्ते । एतेषां धातूनां नियन्त्रणेन एव शरीरं स्वस्थं भवति । यस्यैते धातवः स्वस्थाः सन्ति तादृशो जनः समधातुरुच्यते । तेषां नियन्त्रणाय मानसिकं स्वास्थ्यमपेक्षितं भवति । यस्य मनः स्वस्थमस्ति, तस्य एव स्वास्थ्यं सुरक्षितं भवति । शुद्धाहारस्य माध्यमेन, ध्यानेन, योगाभ्यासादिना, व्यायामद्वारा च मानसिकं स्वास्थ्यं सुरक्षितं भवति । दुर्व्यसनेन, मद्यपानादिना च अस्माकं मनो विकृतम् अस्वस्थञ्च भवति । अस्वस्थे च मनसि बुद्धेर्विकासो न जायते । अत एव उपनिषदि 'आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः' इत्युक्तं वर्तते । युक्ताहारविहारस्य एव जनस्य मनः शुद्धं स्वस्थं च भवति । अतो मनसः शुद्धतायै अस्माभिः सर्वदा यतनीयम् । उक्तं च-

चित्तायत्तं धातुवश्यं शरीरम्
चित्ते नष्टे धातवो यान्ति नाशम् ।
तस्माच्चित्तं यत्नतो रक्षणीयम्
स्वस्थे चित्ते बुद्धयः सम्भवन्ति ॥ इति ।

हाम्रो शरीरमा सात धातुहरू हुन्छन्- रस, रक्त (रगत), मांस (मासु), मेद (बोसो), अस्थि (हाड), मज्जा (मासी) र शुक्र (शुक्रकीट) यिनीहरू सात धातु मानिन्छन् । यी धातुहरूको समुचित नियन्त्रणबाट नै शरीर स्वस्थ हुन्छ । जसका यी धातुहरू ठिक छन्, त्यस व्यक्तिलाई समधातु भनिन्छ । तिनीहरूको नियन्त्रणका लागि मानसिक स्वास्थ्य आवश्यक हुन्छ । जसको मन स्वस्थ छ, त्यसको नै स्वास्थ्य सुरक्षित हुन्छ । शुद्ध आहारको माध्यमले, ध्यानले, योगाभ्यास

व्यायाम आदिले मानसिक स्वास्थ्य सुरक्षित हुन्छ । दुर्व्यसन, मद्यपान आदिले मन विकृत र अस्वस्थ हुन्छ । अस्वस्थ मनमा बुद्धिको विकास हुँदैन । त्यसकारण उपनिषद्मा 'आहारशुद्धि भएपछि मन शुद्ध हुन्छ र मन शुद्ध भएपछि ज्ञानको स्फुरण हुन्छ' भनी बताइएको छ । आहारविहारमा सन्तुलन भएको व्यक्तिको मन स्वस्थ हुन्छ । हामीले मनको शुद्धताका लागि सधैँ यत्न गर्नुपर्छ । उक्ति पनि छ-

यो शरीर धातुहरूको वशमा छ र धातुहरू चित्त(मन)द्वारा नियन्त्रित हुन्छन् । चित्त नष्ट भए धातुहरू पनि नष्ट हुन्छन् त्यसकारण चित्तको यत्नपूर्वक रक्षा गर्नुपर्छ । स्वस्थ चित्तमा नै बुद्धिको उदय हुन्छ ।

**(क) एतस्माद् अनुच्छेदात् पञ्च क्रियापदानि अन्विष्य तेषां प्रयोगेण मौलिकवाक्यानि रचयत ।**

**(ख) गद्यं पठित्वा उत्तरयत**

(अ) सप्त धातवः के ?

(आ) कः समधातुः उच्यते ?

(इ) धातूनां नियन्त्रणाय किमावश्यकम् भवति ?

(ई) मानसिकं स्वास्थ्यं कथं सुरक्षितं भवति ?

(उ) अस्वस्थे मनसि किं न जायते ?

(ऊ) कीदृशस्य जनस्य मनः शुद्धं स्वस्थं च भवति ?

(ए) उपनिषदि किमुक्तं वर्तते ?

**(ग) पद्यं पठित्वा उत्तरयत**

(अ) शरीरं कीदृशमस्ति ?

(आ) कदा धातवः नाशं यान्ति ?

(इ) अस्माभिर्यत्नतः किं रक्षणीयम् ?

(ई) बुद्धयः कीदृशे चित्ते सम्भवन्ति ?

## लेखनम्

१. **अधस्तनानि पदानि प्रयुज्य शुद्धानि वाक्यानि रचयत**

समाप्य, यथोचितम्, सुस्पष्टम्, ऐच्छत्, व्यतीतानि, बुभुक्षितः

२. **पाठं पठित्वा तस्य सारांशं लिखत ।**

३. **एकस्मिन् वाक्ये उत्तरयत**

(क) मनसः, वाचः, प्राणस्य च विकासः कथं भवति ?

(ख) श्वेतकेतुना किं न श्रुतम्, न चानुभूतम् ?

(ग) अन्नस्य कतमः अंशः पुरीषं भवति ?

(घ) अशितस्य अन्नस्य मथनं केन भवति ?

(ङ) जलस्य त्रयः अंशाः केन-केन रूपेण परिणमन्ते ?

(च) घृतादिकं किं रूपमस्ति ?

(छ) श्वेतकेतुः पञ्चदश दिनानि जीवनं केन निर्वहति ?

(ज) कीदृशोऽग्निः बहु दग्धुं न शक्नोति ?

**४. पाठस्य द्वितीयतृतीयचतुर्थपञ्चमानुच्छेदान् संवादशैल्यां लिखत ।**

**५. पाठस्य कथायाः सारांशं स्वशब्दैः लिखत ।**

**६. अधस्तनप्रश्नानां सङ्क्षेपेण उत्तराणि लिखत**

(क) अशितमन्नं कथं परिणमते ?

(ख) आरुणिः प्राणस्य विषये किमुपदिष्टवान् ?

(ग) वाङ्मनःप्राणाः कथं विकसिता भवन्ति ?

(घ) दधिमथनस्योदाहरणद्वारा अन्नेन मनसो विकासं वर्णयत ।

(ङ) आरुणिः श्वेतकेतोः कथं परीक्षणम अकरोत् ?

**७. स्वगिरा शरीरस्य स्वरूपं वर्णयत ।**

**८. प्रदत्तसङ्केतानुसारं कथां विलिख्य शीर्षकं च लिखत**

एकः साधुः ...., तस्य आङ्गलदेशे गमनम्..., रूप्यकाणाम् अभावः..., तत्र जीवनस्य निर्वाहाय कठिनता..., मार्गे एव वासः..., बुभुक्षया तृषया च दुःखस्यानुभवः..., समीपे एकः विद्यालयः..., प्रातः विद्यालयस्य समयः...., एकस्याः बालिकायाः समीपे गमनम्...., बालिकया भोजनस्य जलपानस्य च व्यवस्था..., साधोः प्रसन्नता..., आशीर्वादः..., आङ्गलदेशे गत्वा अपि मार्गे निवासः अभूदिति मा वदतु इति बालिकायाः अनुरोधः....., तस्याः राष्ट्रभक्तिं दृष्ट्वा साधोः आश्चर्यम् ।

**९. अधस्तनं गद्यं पठित्वा निम्नाङ्कितानि भाषिककार्याणि कुरुत**

अस्माकं शरीरस्याभ्यन्तरे यो वायुः सञ्चरति, सः प्राणः उच्यते । यस्यान्तः प्राणवायुः प्रचलति, स जीवितो भवति । श्वासनिःश्वासभ्यां प्राणः संरक्षितो भवति । प्राणायामद्वारा प्राणानां शोधनं कर्तु शक्यते । विशेषतो योगशास्त्रे प्राणायामस्य चर्चा प्राप्यते । उपनिषत्स्वपि प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वं च प्रतिपादितं वर्तते । यद्यपि शरीरान्तः सञ्चारी वायुः एक एव भवति तथापि कार्यभेदेन तस्य प्राणादयः पञ्च भेदाः प्रसिद्धाः सन्ति- प्राणः, अपानः, समानः, व्यानः, उदानश्चेति । प्राणवायुर्हृदि भवति । अपानवायुः गुदे भवति । एषोऽधोमार्गेण निःसरति । समानवायुर्नाभिप्रदेशे भवति । उदानः कण्ठदेशे भवति । व्यानः सर्वशरीरेषु समानरूपेण विचरति । एतद् अधोनिर्दिष्टश्लोकेन स्पष्टं भवति-

हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।
उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥ इति ।

एतैरेव वायुभिः अस्माकं शरीरं व्यवस्थितं भवति । प्राणवायुः शरीरस्य कृते आवश्यकं स्वस्थं वायुतत्त्वं व्यवस्थापयति । अपानवायुः मलमूत्रादीनां निष्कासनप्रक्रियां नियमयति । समानवायुः आहृतस्य अन्नस्य शरीरे वितरणं करोति । उदानवायुः शरीरस्योपरिभागे विद्यमानान् अवयवान् नियमयति । व्यानः स्नायुमार्गेण सर्वत्र व्याप्तं सन् रक्तसञ्चारादिप्रक्रियां नियमयति । एतेषु पञ्चसु वायुषु स्वस्थेषु एव मानवः स्वस्थो भवति । अतः स्वास्थ्यस्य रक्षायै प्राणायामः करणीयः ।

**(क) पाठं पठित्वा परस्परं मेलयत**

| **समूहः क** | **समूहः ख** |
|---|---|
| अपानः | कण्ठदेशे |
| प्राणः | सर्वशरीरे |
| समानः | हृदि |
| व्यानः | गुदे |
| उदानः | नाभिमण्डले |

**(ख) सारिणीम् अवलोक्य उदाहरणानुसारं वाक्यानि रचयत**

| | | |
|---|---|---|
| उदानः | श्वासनिःश्वासौ | |
| समानः | मलमूत्रादिनिष्कासनम् | |
| व्यानः | आहृतवस्तुनो वितरणम् | नियमयति । |
| प्राणः | शरीरस्य उपरिभागम् | |
| अपानः | रक्तसञ्चारम् | |

उदाहरणम् - प्राणः श्वासनिश्वासौ नियमयति ।

**(ग) उत्तराणि लिखत**

(अ) कः प्राण उच्यते ?

(आ) प्राणानां शोधनं केन कर्तुं शक्यते ?

(इ) प्राणायामस्य चर्चा विशेषतः कुत्र लभ्यते ?

(ई) प्राणस्य पञ्च भेदाः के ?

(उ) प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वं च कुत्र प्रतिपादितं वर्तते ?

हाम्रो शरीरभित्र जुन वायु रहन्छ, त्यसलाई प्राण भनिन्छ। जसको शरीरमा प्राणवायु चलिरहन्छ, त्यो व्यक्ति नै जीवित हुन्छ । श्वास-प्रश्वाासद्वारा प्राण संरक्षित हुन्छ । प्राणायामद्वारा पनि प्राणको शुद्धि गर्न सकिन्छ । योगशास्त्रमा प्राणायामको विषयमा विशेष चर्चा पाइन्छ । उपनिषद्मा पनि प्राण नै श्रेष्ठ हो भन्ने बताइएको छ । यद्यपि शरीरभित्र चल्ने वायु एउटै हुन्छ, तर पनि फरक फरक कामका दृष्टिले त्यसलाई प्राण, अपान,समान, उदान, व्यान गरी पाँच भेदमा वर्गीकरण गरिन्छ । प्राणवायु हृदयमा रहन्छ । अपान वायु गुदद्वारमा रहन्छ । यो

वायु तलतिरबाट निस्किन्छ। समान वायु नाभिको क्षेत्रमा रहन्छ। उदान कण्ठ क्षेत्रमा रहन्छ। व्यान वायु शरीरमा सबैतिर समान रूपले रहन्छ। यो सबै तलको श्लोकबाट स्पष्ट हुन्छ।

यिनै वायुद्वारा हाम्रो शरीर व्यवस्थित हुन्छ। प्राण वायुले शरीरका लागि आवश्यक स्वस्थ वायुतत्त्व(अक्सिजन)को व्यवस्थापन गर्छ। अपान वायुले मल, मूत्र आादिको निष्कासन प्रक्रिया नियन्त्रित गर्छ। समान वायुले खाइएको अन्नको शरीरमाा वितरण गर्छ। उदान वायुले शरीरको माथिल्लो भागका अङ्गहरूलाई नियमन गर्छ। व्यान वायु नसाको माध्यमबाट सबैतिर फैलिएर रक्तसञ्चार आदि प्रक्रियालाई नियमन गर्छ। यी पाँच वायुको सन्तुलन मिलेमा मात्र मानव स्वस्थ रहन्छ। त्यसकारण स्वास्थ्यरक्षाका लागि प्राणायाम गर्नुपर्छ।

## व्याकरणानुशीलनम्

**१. अधस्तनवाक्यानि सम्यक् पठत**

(क) रामः ह्यः गृहम् अगच्छत्।

रामः ह्यः गृहं गतवान्।

(ख) सीता सम्यक् कार्याणि अकरोत्।

सीता सम्यक् कार्याणि कृतवती।

(ग) मम मित्रं पुस्तकं अपठत्।

मम मित्रं पुस्तकम् पठितवत्।

**२. अधस्तनसारिणीं पूरयत**

| लङ्लकारे रूपम् | क्तवतुप्रत्ययः | | |
|---|---|---|---|
| | पुँल्लिङ्गम् | स्त्रीलिङ्गम् | नपुंसकलिङ्गम् |
| अभवत् | भूतवान् | भूतवती | भूतवत् |
| अगच्छत् | ....... | गतवती | गतवत् |
| अखादत् | खादितवान् | ....... | खादितवत् |
| अलिखत् | लेखितवान् | लेखितवती | ....... |
| अकरोत् | कृतवान् | ....... | ....... |
| अददात् | ....... | दत्तवती | ....... |
| अजयत् | जितवान् | ....... | ....... |
| अनयत् | ....... | नीतवती | नीतवत् |
| अशृणोत् | श्रुतवान् | ....... | ....... |
| अपिबत् | पीतवान् | ....... | ....... |

३. **अधस्तनसारिणीं पठित्वा उपरि प्रदत्तानां शब्दानां रूपाणि सञ्चालयत**

| | लिङ्गम् | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|
| श्रु+क्तवतु | पुँल्लिङ्गम् (श्रुतवान्) | श्रुतवान् | श्रुतवन्तौ | श्रुतवन्तः |
| | स्त्रीलिङ्गम् (श्रुतवती) | श्रुतवती | श्रुतवत्यौ | श्रुतवत्यः |
| | नपुंसकलिङ्गम् (श्रुतवत्) | श्रुतवत् | श्रुतवती | श्रुतवन्ति |

४. **क्तवतुप्रत्ययान्तानि क्रियापदानि विन्यस्य अधस्तनस्य अनुच्छेदस्य पुनर्लेखनं कुरुत**

मम भ्राताः ह्यः काष्ठमण्डपम् अगच्छत् । भ्रात्रा सह भगिनी अपि अगच्छत् । तेषां गमनसमये पिता आशीर्वादम् अददात् । अहम् ताभ्यां सह न अगच्छम् । माता भगिन्यै किञ्चिद् रूप्यकाणि अददात् । गमनसमये भगिनी नमस्कारम् अकरोत् । तद् दृष्ट्वा मम मनः प्रसन्नः अभवत् ।

५. **पाठात् क्तवतुप्रत्ययान्तानि पदानि अन्विष्य लिखत ।**

## रचनात्मकः अभ्यासः

१. **युष्माभिः श्रुताम् एकां कथाम् अन्विष्य कक्षायां श्रावयत ।**

२. **कक्षायां छात्रान् समूहेषु विभजत । प्रतिसमूहमेकैकम् अवयवानां महत्त्वस्य विषये विमर्शं कुरुत । निष्कर्षं च कक्षायां श्रावयत ।**

## श्रवणपाठः

आयुषो ज्ञानाय, लाभाय, स्थिरतायै च आयुर्वेदस्य ज्ञानमा आवश्यकम् भवति । आयुर्वेदे कथम् आयुः लभ्यते कथं च स्वास्थ्यं सुरक्षितं भवति इति विषये चर्चा अस्ति । समकायः, समाग्निः, समधातुः, सममलः, समक्रियः, प्रसन्नेन्द्रियः प्रसन्नात्मा च जनः स्वस्थो भवति इति कथ्यते । आयुर्वेदे स्वास्थ्यस्य संरक्षणस्य उपायाः निर्दिष्टाः भवन्ति । स्वस्थमानवानां स्वास्थ्यस्य संरक्षणम्, अस्वस्थमानवानां रोगस्य निवारणञ्च आयुर्वेदस्य मुख्यं प्रयोजनमस्ति ।

आयुर्वेदः अष्टसु भागेषु विभक्तमस्ति । शल्यतन्त्रम्, शालाक्यतन्त्रम्, कायचिकित्सा, भूतविद्या, कौमारभृत्यम्, रसायनतन्त्रम्, अगदतन्त्रम्, वाजीकरणतन्त्रं चेति आयुर्वेदस्य अष्टौ अङ्गानि सन्ति । प्रथमे तन्त्रे शल्यचिकित्साया विवेचनं लभ्यते । शालाक्यतन्त्रे शरीरस्योपरिभागे वर्तमानेषु मुखनासिकादिभागेषु जायमानानां व्याधीनां परिचयेन सह तत्परिहारस्योपाया निर्दिष्टाः वर्तन्ते । कायचिकित्सायां सर्वशरीरव्यापिनां ज्वरमोहादीनां रोगाणां नाशस्योपायाः प्रतिपादिताः सन्ति । भूतविद्यायां दैवप्रकोपस्य पीडायाः शमनस्य उपाया निर्दिष्टाः वर्तन्ते । कौमारभृत्ये दूषितदुग्धादीनां सेवनेन समुत्पन्नानां बालव्याधीनां निराकरणस्य उपायाः भवन्ति । अगदतन्त्रे सर्पादीनां विषस्य शमनोपायाः निर्दिष्टाः सन्ति । रसायनतन्त्रे जराव्याधीनां शमनस्य उपायाः सन्ति । वाजीकरणतन्त्रे शरीरस्य पुष्टये निर्धारितानां रसायनानां विस्तृतं विवरणं लभ्यते ।

एकादशः पाठः

# राजेन्द्रलक्ष्मीः

## पाठप्रवेशः

महाकालीमाध्यमिकविद्यालये प्रतिमासम् अतिरिक्तक्रियाकलापा आयोज्यन्ते । तेषु विद्यार्थिन उत्साहेन सहभागिनो भवन्ति । अस्मिन् मासे सामान्यज्ञानपरीक्षणप्रतियोगिता आयोजिताऽस्ति । कार्यक्रमस्य संयोजनं कक्षाशिक्षकः कुर्वन्नस्ति । स कथयति, "यः सर्वाधिकान् प्रश्नान् उत्तरयति स आकर्षकं पारितोषिकं प्राप्स्यति ।" विद्यार्थिनः करतलवादनं कुर्वन्ति । शिक्षक उत्तरदानाय तत्परा भवितुं निर्दिशति । विद्यार्थिनो ब्रुवन्ति, "तत्परा वयम्, गुरवः !" शिक्षकः क्रमेण पृच्छति । विद्यार्थिन इत्थम् उत्तरयन्ति ।

शिक्षकः कण्ठहारः केन निर्मितः ?

समीरः स्वर्णेन निर्मितः ।

शिक्षकः वस्त्रं केन निर्मितम् ?

सरला कार्पासेन निर्मितम् ।

शिक्षकः यष्टिः केन निर्मिता ?

राजेशः काष्ठेन निर्मिता ।

शिक्षकः दधि केन निर्मितम् ?

सुभाषः दुग्धेन निर्मितम् ।

शिक्षकः काष्ठमण्डपस्य राज्ञीपुष्करिणी केन निर्मिता ?

हितमानः प्रतापमल्लेन निर्मिता ।

शिक्षकः जानकीमन्दिरं कया निर्मितम् ?

सरिता वृषभानुकुमार्या निर्मितम् ।

शिक्षकः नेपालस्य प्रथमा शासिका का आसीत् ?

सुशीला न जानामि, गुरवः

शिक्षकः तर्हि एतद् उत्तरयत, नेपालः कैः निर्मितः ?

सर्वे विद्यार्थिनः (समवेतस्वरेण) तदपि उत्तरयितुं न शक्नुमः, गुरवः ! कठिनोऽयं प्रश्नः ।

उत्तराणां कृते शिक्षकः सर्वेभ्यो धन्यवादं व्याहरति। स कथयति, “यूयं यत् कथयथ, तत् सत्यम्। नेपालो न केनापि एकेन जनेन निर्मितोऽस्ति। अस्माकं पूर्वजानां बुद्ध्या, बलेन च, वीराणां वीराङ्गनानाञ्च शौर्येण परिश्रमेण च राष्ट्रमेतद् निर्मितमस्ति। ज्ञानिनां ध्यानिनाञ्च आशीर्वचोभिः मार्गनिर्देशनेन च नेपालः परिपालितो वर्तते। एष देशो वयस्कानाम्, यूनाम्, ज्येष्ठनागरिकाणाञ्च सत्कर्मणां परिणामो मन्यते। नेपालो नेपालिभिरेव रक्षितः, पालितश्चास्ते। इदानीमपि देशोऽयमस्माभी रक्ष्यमाणः पाल्यमानश्च वर्तते। ऐतिहासिकशासकाः शासिकाश्च सङ्कटापन्नसमयेऽपि सर्वोपायै राष्ट्रमिदमरक्षन्। ते विस्तार्य एकीकृत्य च विशालं नेपालं न्यासरूपेण अस्मभ्यमार्पयन्। तान् प्रति वयं सदैव कृतार्थाः स्मः। राष्ट्रनिर्माणे नार्यश्च महद् योगदानमकुर्वन्। तासु बुद्धिमती दूरदर्शिनी च राज्ञी राजेन्द्रलक्ष्मीः शीर्षस्थानमधिवसति।”

महाकाली माध्यमिक विद्यालयमा प्रत्येक महिना अतिरिक्त क्रियाकलाप हुने गर्छन्। तिनमा विद्यार्थी उत्साहसाथ सहभागी हुन्छन्। यस महिनामा सामान्यज्ञानको परीक्षण गर्ने प्रतियोगिता आयोजना गरिएको छ। कार्यक्रमको संयोजन कक्षाशिक्षकले गर्नुभएको छ। उहाँ भन्नुहुन्छ, “जसले सबैभन्दा बढी प्रश्नको उत्तर दिन्छ उसले आकर्षक पुरस्कार पाउनेछ।” विद्यार्थी ताली पिट्छन्। शिक्षक उत्तर दिनका लागि तयार हुन भन्नुहुन्छ। विद्यार्थी भन्दछन्, “तयार छौँ, गुरु !” शिक्षक पालैपालो सोध्नुहुन्छ। विद्यार्थी यसरी उत्तर दिन्छन्।

| | |
|---|---|
| शिक्षक | गलामा लगाउने सिक्री केबाट बन्छ ? |
| समीर | सुनबाट बन्छ। |
| शिक्षक | कपडा केबाट बन्छ ? |
| सरला | कपासबाट बन्छ। |
| शिक्षक | लट्ठी केबाट बन्छ ? |
| राजेश | काठबाट बन्छ। |
| शिक्षक | दही केबाट बन्छ ? |
| सुभाष | दुधबाट बन्छ। |
| शिक्षक | काठमाडौँको रानीपोखरी कसले बनाए ? |
| हितमान | प्रताप मल्लले बनाए। |
| शिक्षक | जानकी मन्दिर कसले बनाइन् ? |
| सरिता | वृषभानुकुमारीले बनाइन्। |
| शिक्षक | नेपालकी प्रथम महिला शासक को थिइन् ? |
| सुशीला | आउँदैन, गुरु ! |
| शिक्षक | त्यसो भए यसको उत्तर भन, नेपाल ककसले बनाए ? |
| सबै विद्यार्थी (एकै स्वरमा) | त्यसको पनि उत्तर दिन जान्दैनौँ, गुरु ! यो प्रश्न गाह्रो छ। |

उत्तर दिएकामा शिक्षक सबैलाई धन्यवाद दिनुहुन्छ । उहाँ भन्नुहुन्छ, "तिमीहरूले जे भन्यौ त्यो सत्य हो । नेपालको निर्माण कुनै एक जनाले गरेको होइन । हाम्रा पुर्खाको बुद्धि र बल अनि वीर र वीराङ्गनाहरूको शौर्य र परिश्रमले यो राष्ट' बनेको हो । ज्ञानी र ध्यानीहरूको आशीर्वाद र मार्गनिर्देशनले पनि नेपालको परिपालन भएको हो । यो देश वयस्क, युवा र ज्येष्ठ नागरिकको सत्कर्मको परिणाम मानिन्छ । नेपाल नेपालीहरूबाटै रक्षित र पालित छ । अहिले पनि हामीबाट यस देशको रक्षा र पालना भइरहेको छ । ऐतिहासिक शासक र शासिकाहरूले सङ्कटको समयमा पनि यस देशको रक्षा गरे । तिनीहरूले विस्तार र एकीकरण गरेर विशाल नेपाल नासोका रूपमा हामीलाई अर्पण गरे । तिनीहरूप्रति हामी सधैँ कृतार्थ छौँ । राष्ट्रनिर्माणमा नारीहरूले पनि ठुलो योगदान गरे । तिनीहरूमा बुद्धिमती र दूरदर्शी रानी राजेन्द्रलक्ष्मी शीर्षस्थानमा रहेकी छिन् ।"

## मूलपाठः राजेन्द्रलक्ष्मीः



राज्ञी राजेन्द्रलक्ष्मीः पृथ्वीनारायणशाहस्य पुत्रवधूः प्रतापसिँहशाहस्य पत्नी च आसीत् । १८३१ तमे वैक्रमाब्दे दिवङ्गते पृथ्वीनारायणे तदीयपुत्रः प्रतापसिंहशाहः राजा अभवत् । तदा नेपालस्य एकीकरणाभियानं पूर्णतां प्राप्तं नासीत् । प्रतापसिंहस्य राज्यकाले नेपालस्य पूर्वभागे विद्रोहस्य उपक्रमः प्रारब्ध आसीत् । तद् नियम्य राज्यरक्षणस्य विस्तारस्य च कार्यं सततमचलत् । तदवधौ एव प्रतापसिँहः मसूरिकारोगेण ग्रस्तोऽभवत् । तस्य रोगस्य उचितोपचारस्याभावेन षड्विंशतेर्वर्षाणां वयसि १८३४ तमे वैक्रमाब्दे असौ प्राणान् अत्यजत् । प्रतापसिंहः केवलं दशमासाधिकवर्षद्वयं यावद् राज्यसञ्चालनमकरोत् । तदनु तस्य सार्धवर्षद्वयकल्पः पुत्रो रणबहादुरशाहो राजा अभवत् । बालकाय रणबहादुरशाहाय राज्यसञ्चालनार्थं सहयोगी अपरिहार्य आसीत् । तत्र राजेन्द्रलक्ष्मीः अतुल्याममूल्याञ्च भूमिकां निरवहत् ।

रणबहादुरस्य माता राजेन्द्रलक्ष्मी राजसहायिकाया रूपेण राजकार्यं समचालयत् । पृथ्वीनारायणशाहस्य निधनस्य अव्यतीतेऽपि सप्ताहद्वये प्रतापसिंहशाहः प्रासादीयजनानां छलेन, बलेन प्रभावेण च बहादुरशाहं कारावासेऽस्थापयत् । पश्चाद् राजगुरोर्गजराजमिश्रस्यानुरोधेन कारावासाद् उन्मोच्य स देशान्निष्काशित आसीत् । इत्यतः पृथ्वीनारायणस्य कनिष्ठपुत्रो राजकुमारो बहादुरशाहः सपरिवारं भारतस्य बेतियास्थाने वसति स्म ।

पुत्रस्य सहायिकाया रूपेण शासनं सञ्चालयन्ती राजेन्द्रलक्ष्मीर्बहादुरशाहस्य विषये प्रासादीयसभायां व्यमृशत् । सा सभा बहादुरशाहं प्रत्यानेतुं राजेन्द्रलक्ष्मीं परामृशत् । सभायाः सम्मत्या राजप्रासादस्य तात्कालिकपरिस्थितिञ्च विचार्य मिलित्वा कार्यसम्पादनस्योद्देश्येन राजेन्द्रलक्ष्मीर्देवरं बहादुरशाहं नेपालं प्रत्यागन्तुमाह्वयत् । सा रणबहादुरशाहस्य नाम्ना पत्रं विलिख्य बहादुरशाहमानेतुं प्रतिनिधिमण्डलञ्च

प्रैषयत् । बहादुरशाहश्च नेपालं प्रत्यावर्तितुमुत्सुक आसीत् । निमन्त्रणां प्राप्य प्रासादस्य वृत्तान्तं विज्ञाय च स प्रत्यागच्छत् । तस्य भव्यं स्वागतमभवत् । स प्रतापसिँहशाहस्य निधनस्य मासानन्तरं सम्पत्स्यमाने राज्ञो रणबहादुरशाहस्य राज्याभिषेके उपस्थातुं सफलोऽभवत् । बहादुरशाहस्य नेपालं प्रत्यावर्तनस्य पञ्चमासावधिं यावद् देवर-भ्रातृजाये मिलित्वा संयुक्तरूपेण कार्याणि अकुरुताम्, प्रतिविषयं परस्परं विमृश्य कार्यक्रमाँश्च निरधारयताम् । युद्ध-विदेशनीतिसम्बद्धं दायित्वं बहादुरशाहोऽगृह्णात् । अवशिष्टानि कार्याणि राजेन्द्रलक्ष्मीः समपादयत् ।

बहादुरशाहो बालकस्य रणबहादुरशाहस्य नाम्नि राज्यस्य प्रबन्धनं व्यदधात् । तस्य सुप्रबन्धेन नेपालराज्यस्य शक्तिः शनैःशनैः वर्धिता आसीत् । बहादुरशाहस्य नामश्रवणमात्रेण पूर्वदिशो मेचीतः पश्चिमदिशं गढवालभागं यावत् अशेषजना भीता आसन् । तस्य तात्कालिकानां द्वाविंशतेश्चतुर्विंशतेश्च राज्यानां गोरखाराज्ये योजनस्य योजना आसीत् । एतदर्थं स सततं प्रायतत । स गुप्तरूपेण सैन्यसङ्घटनं सबलमकारयत् । राजप्रासादे स्वार्थपरायणानां जनानां समूहोऽपि आसीत् । तस्य समूहस्य केचन जना राजेन्द्रलक्ष्म्याः केचन च बहादुरशाहस्य समर्थका आसन् । प्रतापसिँहशाहस्य शासनकाले एव प्रासादीयजनेषु नैकविषयेषु मतभेदस्य क्रमः प्रारब्ध आसीत् । रणबहादुरशाहस्य राज्यारोहणानन्तरं क्रमोऽयं विषवल्ली इव प्रासरत् ।

राजेन्द्रलक्ष्मी-बहादुरशाहयोर्द्वौ समूहौ स्पष्टरूपेण दृष्टौ आस्ताम् । राजेन्द्रलक्ष्म्याः समूहे स्वरूपसिँहकार्की-व्रजनाथपौडेल-सर्वजितराना-परशुरामथापाप्रभृतयः आसन् । बहादुरशाहस्य समूहे च वंशराजपाँडे-दामोदरपाँडेऽभिमानसिँहबस्नेत-गजराजमिश्र-दलमर्दनशाहामरसिँहथापा-रामकृष्णकुँवर-दलजितशाहादय आसन् । ते शक्तिमधिगन्तुं स्वप्रभून् सत्यमसत्यञ्च श्रावयन्ति स्म । ते देवर-भ्रातृजाययोर्मध्ये वैमनस्यं सृष्ट्वा स्वार्थं पूरयितुं यतन्ते स्म । फलतो देवर-भ्रातृजाययोर्मध्ये मनोमालिन्यमवर्धत प्रतिशोधस्य भावना च अज्वलत् । अग्रजस्य प्रतापसिँहशाहस्यादेशेन देशान्निष्काशितो बहादुरशाहः प्रतिशोधवशाद् भ्रातृजस्य रणबहादुरशाहस्य विरुद्धे कार्यं करिष्यतीति राजेन्द्रलक्ष्मीरचिन्तयत् ।

सैन्यबलेन रणबहादुरशाहः पदच्युतो विधास्यते बहादुरशाहः स्वयं राजा च भविष्यतीति भीत्या राजेन्द्रलक्ष्मीर्बहादुरशाहस्य सर्वाणि कार्याणि विलोक्य बहु अशङ्कत । स्वानुकूलमवसरं प्राप्य सा बहादुरशाहं कारावासमस्थापयत् । कतिचिद्दिनानामनन्तरं राजगुरोर्गजराजमिश्रस्य प्रार्थनया स कारावासाद् मोचितः, राजकार्यञ्च प्रारभत । आत्मनि भ्रातृजायाया आशङ्कां निवारयितुं बहादुरशाहोऽधिकं यत्नमकरोत् तथापि सफलो नाभवत् । परस्परं विरोधोऽवर्धत एव । निरुपायो बहादुरशाहो राजेन्द्रलक्ष्मीं कारावासं प्रेषितवान् । तेन प्रासादीया जना असन्तुष्टा अभवन् । ते सर्वे एकीभूय बहादुरशाहस्य कार्यमरुणन् । अन्ततो बहादुरशाहो नेपालं परित्यज्य पुनर्बेतियास्थानमगच्छत् तत्रैवावसच्च । तदनन्तरं एकाकिनी राजेन्द्रलक्ष्मी राज्यस्य सकलशासनभारमवहत् । सा राज्यविस्तारे सक्रिया अभवत् । तात्कालिकस्य परिवेशस्य परिस्थितेश्चाधारेण विलोकने राजेन्द्रलक्ष्म्याः कार्यमैतिहासिकं सिद्ध्यति ।

